


कृष्णगोपाल ग्रन्थमाला का २०वाँ रत्न

# माधवनिदानम्

## ( मूलमात्र )

श्री आचार्य माधवकर प्रणीतम्

प्रकाशक

कृष्ण-गोपाल आयुर्वेद भवन
कालेड़ा-कृष्णगोपाल (अजमेर)

# रसतन्त्रसार व सिद्धप्रयोगसंग्रह [प्रथम खण्ड]

(संशोधित और परिवर्द्धित प्रथम खण्ड, अष्टम संस्करण)

इस ग्रन्थमें भस्म, रसायन, गुटिका, आसव, अरिष्ट, पाक, अवलेह, लेप, सेक, मलहम, अंजनादि सब प्रकार की औषधियों के सहस्रशः अनुभूत प्रयोग हैं। इस ग्रन्थ को सर्वोपयोगी और सुन्दर बनाने में पूर्ण लक्ष्य रखा गया है। अनेक प्रतिष्ठित और अनुभवी वैद्यराजोंने इस ग्रन्थ की उत्तमता और उपादेयता विषयक अति सन्तोषप्रद सम्मतियाँ प्रदर्शित की हैं। बनारस हिन्दू युनिवर्सिटी, यू० पी० मेडिशीनबोर्ड, निखिल भारतीय आयुर्वेद विद्यापीठ और अनेक पाठशालाओं में यह आलोच्य ग्रन्थ रूप से स्वीकृत हुआ है।

भूमिका में श्रीमान् पं० श्रीगोवर्धन जी शर्मा छांगाणी प्राणाचार्य, भिषक्केसरी, भूतपूर्व अध्यक्ष निखिल भारतवर्षीय आयुर्वेद महामण्डल ने इस ग्रन्थ की विशेषताएँ निम्नानुसार दर्शाई हैं—

( १ ) भस्मप्रकरण में "कृष्ण-गोपाल धर्मार्थ औषधालय" की रसायन शाला में जिस विधि से भस्में बनाई जाती हैं, जो शतशोऽनुभूत हैं, उन्हें दिल खोल कर लिख दिया है। इतना ही नहीं, उनका गुण विवेचन भी विस्तार पूर्वक लिखा है।

( २ ) कूपीपक्व रसायन अर्थात् मकरध्वज, चन्द्रोदय आदि बनाने की सरल अनुभूत विधियाँ, जैसी इस संग्रह में हैं वैसी किसी भी संस्कृत, हिन्दी, मराठी, गुजराती, बंगला आदि भाषा ग्रन्थों में नहीं हैं।

( ३ ) अनुक्रमणिका भी दो प्रकार से दी है यथा-रोगानुसार और औषधियों के नामानुसार। रोगानुसार औषध सूची में विशेषता यह है, कि ज्वरभेद और वातादि दोष भेदानुसार औषधि भेद दिखाये गये हैं।




कृष्णगोपाल ग्रन्थमाला का २०वाँ रत्न

# माधवनिदानम्

## ( मूलमात्र )

श्री आचार्य माधवकर प्रणीतम्

प्रकाशक

कृष्ण-गोपाल आयुर्वेद भवन
कालेड़ा-कृष्णगोपाल (अजमेर)

प्रथम संस्करण
प्रति २०००
१९५६ ई०
मूल्य रु० १-८-०

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥

❀ ❀ ❀

यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया॥

❀ ❀ ❀

यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम्॥

च० सं० सू० २०-२४।२६

मुद्रक—
ठाकुर नाथूसिंह राठौड़
कृष्णगोपाल मुद्रणालय
कालेड़ा-कृष्णगोपाल (अजमेर)

# * निवेदन *

यह बात सभी विद्वान् वैद्य जानते हैं कि चिकित्सा कार्य में निदान ज्ञान की पूर्ण आवश्यकता है। बिना निदान ज्ञान प्राप्त किये यदि चिकित्सा की जाय, तो रोग की शांति बहुधा नहीं होती और कई बार चिकित्सक को अपयश का भागी भी होना पड़ता है।

भगवान आत्रेय कहते हैं कि:—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म भिषक् पश्चाज्ज्ञान पूर्वं समाचरेत्॥

इस वचन से भगवान् आत्रेय रोगनिदान की आवश्यकता दर्शाई है; किन्तु चरक, सुश्रुत, अष्टांगहृदय आदि संहिता ग्रन्थों में रोगों का निदान एक स्थान पर न देकर प्रकरणवश अनेक स्थानों पर कहीं सूक्ष्म और कहीं विस्तृत रूपमें दिया गया है। इस हेतु से छात्र एवं सामान्य वैद्य आयुर्वेदिक निदान में पूर्ण योग्य नहीं हो सकते थे। इस कमी को दूर करने के लिए श्री० आचार्य माधवकर ने बृहत् संहिता ग्रन्थ चरक, सुश्रुत, अष्टांगहृदय आदि मे निदानोपयोगी भाग को ग्रहण कर इस "माधव निदान" नामक संग्रह ग्रन्थ की निश्चित क्रमानुसार रचना की।

निदानोपयोगी इस ग्रन्थ को अत्यन्त उपयोगी मान कर अनेक आयुर्वेद के विद्वानों ने संस्कृत और हिन्दी आदि भाषाओं में भिन्न-भिन्न प्रकार की टीकायें की हैं। एवं इस ग्रन्थ को अनेक परीक्षा समितियों ने भी आयुर्वेदिक पाठ्य-क्रम में सम्मलित कर इस पुस्तक की उपयोगिता को बढ़ा दिया है।

कुछ समय से कृष्णगोपाल आयुर्वेद भवन ने ज्ञान से परिमार्जित छोटी-छोटी पुस्तकें प्रकाशित करने की योजना की है, जिससे सस्ते दामों में छात्र एवं सामान्य वैद्य भी लाभ ले सकें। इस उद्देश्य से इस पुस्तक को सर्वोपयोगी मानकर इस संगृहीत ग्रन्थ के मूल भाग का प्रकाशन कराया है।

वर्तमान में जो 'माधवनिदान' मिलता है उसमें वर्णित समस्त पाठ देकर साथ-साथ आधुनिक रोगों का वर्णन जो चरक, सुश्रुत, अष्टांग हृदय में नहीं है। आर्ष ग्रन्थों के पश्चात् बने संगृहीत ग्रन्थों में से ग्रहण कर यथा स्थान देकर पुस्तक को और भी उपयोगी बनाया है।

मूलमात्र माधवनिदान प्रकाशित करने के समय निर्णय सागर प्रेससे प्रकाशित माधवनिदान ( मधुकोश और आतङ्कदर्पण व्याख्यासह ) और क्षेमराज श्रीकृष्ण दास से प्रकाशित हिंदी टीका सह माधवनिदान का आधार लिया है, इन प्रकाशकों का हम आभार मानते हैं।

आजकल प्राय: आयुर्वेद के छात्र एवं सामान्य वैद्य-समाज रोगों के एलापैथिक नामों से अनभिज्ञ है। चिकित्सा कार्य में कभी-कभी डाक्टरों का मुकाबला होने पर बड़ी कठिनाई होती है, अतः पुस्तक के अन्त भाग में रोगों का डाक्टरी तथा संस्कृत नाम भी दिया गया है। इसमें परिश्रम बहुत करना पड़ा है और पुस्तक के पृष्ठ भी बढ़ गये हैं।

आयुर्वेद और एलोपैथी की परिभाषा का आधार विभिन्न नियमों पर रहा है। इस हेतु से पर्याय शब्द पूर्णांश समान नहीं बन सकता; तथापि रोगों के लक्षण अधिकांश में मिलते जुलते रहने पर उसे ही पर्याय शब्द मान लिया गया है।

उक्त सूचीको तैयार करनेमें सद्गत पं० जादवजी त्रिकमजी आचार्य की सूचीका आधार लियागया है। इसलिए उनके हम आभारी हैं। यद्यपि वह सूची अति संक्षिप्त है, तथापि दूसरी विस्तृत सूची हमें नहीं मिल सकी है। इस तरह साधनों की न्यूनता और बुद्धिमांद्य आदि दोषों से भूलें और न्यूनता रह गई हो, यह संभवित है। इस सम्बन्ध में हम क्षमा प्रार्थी हैं।

विद्वान और अनुभवी चिकित्सकों का कृपा प्रसाद मिलने पर अपूर्णता की पूर्ति नूतन संस्करण में कर ली जायगी। इसके लिए हम उचित प्रयत्न करेंगे।

यदि इस प्रकाशित सूची से विद्यार्थी वर्ग को थोड़ी बहुत सहायता मिलेगी, तो हम हमारा परिश्रम सफल मानेंगे।

पुस्तक में अधिक अशुद्धि न हो, इस लिए यथा शक्य सम्हाल रखा गया है। फिर भी सामान्य मात्राओं की कुछ अशुद्धि रह गई हैं। एवं कुछ पृष्ठों में मात्राएं टूटने से अशुद्धियां नयी हो गई है। इस सम्बन्ध में हम पाठकों से करबद्ध क्षमा याचना करते हैं।

**पुनश्च**

पारिभाषिक शब्द सूची का अधिकांश छप जाने पर श्री० डॉ० भास्कर गोविंद घाणेकर B. Sc; M. B. B. S. आयुर्वेदाचार्य की सुश्रुत संहिता निदान स्थान की टीका मिली। उस ग्रन्थ में अनेक पारिभाषिक शब्द हैं। जिनका उपयोग परिभाषा मिलाने के लिए नये संस्करणमें हो सकेगा।

पृष्ठ २४१ से २४४ तक का अन्तर्भाव पहले के पृष्ठों में हो जाने से उनको हटा दिया गया है।

ता० १०-११-५६
(गोपाष्टमी २०१३)
कालेड़ा–कृष्णगोपाल
(अजमेर)

विनीत—
नाथूसिंह वर्मा
उपाध्यक्ष
कृष्णगोपाल आयुर्वेद भवन

## माधव निदानान्तर्गत विषयाणामनुक्रमणिका

| रोगनामानि | | पृष्ठानि |
|---|---|---|

## विषयानुक्रमणिका

* ॐ *

श्री धन्वन्तरये नमः

# * माधवनिदानम् *

## मूल-मात्र

—•—

### पञ्चनिदानलक्षणम्

प्रणम्य जगदुत्पत्तिस्थितिसंहारकारणम् ।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं शिवम् ॥ १ ॥
नानामुनीनां वचनैरिदानीं,
समासतः सद्भिषजां नियोगात् ।
सोपद्रवारिष्टनिदानलिङ्गो,
निबध्यते रोगविनिश्चयोऽयम् ॥ २ ॥
नानातंत्रविहीनानां भिषजामल्पमेधसाम् ।
सुखं विज्ञातुमातङ्कमयमेव भविष्यति ॥ ३ ॥
निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ ४ ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्यायैः प्राग्रूपं येन लक्ष्यते ॥ ५ ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ६ ॥
तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ७ ॥

हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ८ ॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ॥ ९ ॥
यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिरामयस्याऽसौ सम्प्राप्तिर्जातिरागतिः ॥१०॥
संख्याविकल्पप्राधान्यबलकालविशेषतः ।
सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥११॥
दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ।
स्वातंत्र्यपारतंत्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥१२॥
हेत्वादिकात्स्न्यार्वयवैर्बलाबलविशेषणम् ।
नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥१३॥
इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ॥१४॥
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥१५॥
निदानार्थकरो रोगो रोगस्याप्युपजायते ।
तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्यते ॥१६॥
रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते ।
प्लीहाभिवृद्ध्या जठरं जठराच्छोथ एव च ॥१७॥
अर्शोभ्यो जाठरं दुःखं गुल्मश्चाप्युपजायते ।
(दिवास्वापादिदोषश्च प्रतिश्यायश्च जायते । )
प्रतिश्यायादथो कासः कासात्संजायते क्षयः ॥१८॥
क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते ।
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ॥१९॥

कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ।
न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च ॥
एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः ॥२०॥

तस्माद्यत्नेन सद्वैद्यैरिच्छद्भिः सिद्धिमुद्धताम् ।
ज्ञातव्यो वक्ष्यते योऽयं ज्वरादीनां विनिश्चयः॥२१॥
इति श्रीमाधवकरविरचिते माधवनिदाने पञ्चनिदानलक्षणं समाप्तम्॥१॥

अथ ज्वरनिदानम् ।

(देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली ।
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा) ॥ १ ॥
दक्षापमानसंक्रुद्धरुद्रनिःश्वाससम्भवः ।
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ १ ॥
मिथ्याहारविहाराभ्यां दोषाह्यामाशयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥ २ ॥
स्वेदावरोधः संतापः सर्वाङ्गग्रहणं तथा ।
युगपद्यत्र रोगे च स ज्वरो व्यपदिश्यते ॥ ३ ॥
श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ ४ ॥
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ ५ ॥
(सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत् ॥ ६ ॥
रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ।
सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ॥ ७ ॥

वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् + ।
निद्रानाशः क्षवस्तंभो गात्राणां रौक्ष्यमेव च ॥ ८ ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ।
शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे ॥ ९ ॥
वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ।
कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते ॥१०॥
प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वं॰ पैत्तिके भ्रम एव च ॥११॥
स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥१२॥
( नात्युष्णगात्रदा छर्दिरङ्गसादोऽविपाकिता )
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ।
[स्रोतोरोधो रुगल्पत्वं प्रसेको लवणास्यता
नात्युष्णगात्रताच्छर्दिर्लालास्रावोऽविपाकता]
प्रतिश्यायोऽरुचिःकासःकफजेऽक्ष्णोश्चशुक्लता॥१३॥
तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥१४॥
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ।
स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥ ५॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥१६॥

---

+ 'मुखशोषणम्' पाठान्तरम्

॰ 'नेत्रत्वक्' पाठान्तरम्

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ।
मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥१७॥
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥१८॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥१९॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥२०॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥२१॥
कृशत्वं नातिगात्राणां प्रततं❀ कण्ठकूजनम् ।
कोठानां + श्यावरक्तानां मण्डलानां च दर्शनम् ॥२२॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ।
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥२३॥
(भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।
वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥ १ ॥
शैत्यं कासोऽरुचिस्तन्द्रापिपासादाहहृद्व्यथाः ।
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे × विदुः ॥ २ ॥
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥ ३ ॥
सन्ध्यस्थिशिरसां शूलं प्रलापो गौरवं भ्रमः ।
वातोल्बणेस्याद्द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ॥ ४ ॥

---

❀ 'सततं' + कोष्ठानां × पित्तानुगे पाठान्तरम् ।

रक्तविण्मूत्रता दाहः स्वेदस्तृष्णा बलक्षयः ।
मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥ ५ ॥
आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः ।
कफोल्बणं सन्निपातं तन्द्राकासेन चादिशेत् ॥ ६ ॥
प्रतिश्या छर्दिरालस्यं तन्द्रारुच्यग्निमार्दवम् ।
हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम् ॥ ७ ॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ ८ ॥
शिरोरुग्वेपथुश्वासप्रलापच्छर्द्यरोचकाः ।
हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥ ९ ॥
शीतता गौरवं तन्द्रा प्रलापोऽस्थिशिरोतिरुक् ।
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥१०॥
वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः ।
कफहीने वातमध्ये लिङ्गं पित्ताधिके विदुः ॥११॥
श्वासःकासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम् ॥१२॥
वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति ।
तस्य ज्वरोऽङ्गमर्दस्तृट्तालुशोषप्रमीलकाः ॥१३॥
आध्मानतन्द्रारुचयःश्वासकासभ्रमश्रमाः ।
पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति ॥१४॥
अन्तर्दाहो बहिःशीत तस्य तन्द्रा च बाधते* ।
तुद्यते दक्षिणं पार्श्वमुरः शीर्षगलग्रहाः ॥१५॥

* 'तन्द्राविवर्धते'

निष्ठीवेत्कफपित्तं च तृष्णा कण्ठश्च‡ जायते ।
विड्भेदश्वासहिक्काश्च बाधन्ते सप्रमीलकाः ॥१६॥
विसुफल्गु❀ च तौ नाम्ना सन्निपातावुदाहृतौ ।
श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥१७॥
तस्य शीतज्वरो निद्रा क्षुत्तृष्णा पार्श्वनिग्रहः ।
शिरोगौरवमालस्यमन्यास्तम्भप्रमीलकाः ॥१८॥
उदरं दह्यते + चास्य कटिर्बस्तिश्च दूयते ।
सन्निपातः स विज्ञेयो मकरीति सुदारुणः ॥१९॥
वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ।
तस्य तृष्णाज्वरग्लानिपार्श्वरुग्दृष्टिसंभ्रमाः ॥२०॥
पिपिडकोद्वेष्टनं दाह ऊरुसादो बलक्षयः ।
सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः ॥२१॥
निर्भिद्यते गुदं चास्य वस्तिश्च परिकृत्यते ।
आयम्यते भिद्यते च हिक्कते विलपत्यपि ।
मूर्च्छति स्फार्यते रौति नाम्ना विस्फुरकः स्मृतः ॥२२॥
पित्तोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥२३॥
तस्य दाहो ज्वरो घोरो बहिरन्तश्च वर्धते ।
शीतं च सेवमानस्य कुप्यतः कफमारुतौ ॥२४॥
ततश्चैनं प्रधावन्ते हिक्काश्वासप्रमीलकाः ।
विसूचिका पर्वभेदः प्रलापो गौरवं क्लमः ॥२५॥
नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्द्धते ।
स्विद्यमानस्य रक्तं च स्रोतोभ्यः संप्रवर्तते ॥२६॥

---

‡ 'कंठश्च दूयते' ❀ 'विध्रुफल्गु' + 'तुद्यते'

शूलेन पीड्यमानस्य तृष्णा दाहश्च वर्द्धते ।
असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते ।
नहि जीवत्यहोरात्रमेतेनाविष्टविग्रहः ॥२७॥
कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥२८॥
तस्य शीतज्वरस्वप्नगौरवालस्यतन्द्रयः ।
छर्दिमूर्च्छातृषादाहतृप्त्यरोचकहृद्ग्रहाः ॥२९॥
ष्ठीवनं मुखमाधुर्यं श्रोत्रवाग् दृष्टिनिग्रहः ।
श्लेष्मणो निग्रहं चास्य यदा प्रकुरुते भिषक् ॥३०॥
तदा तस्य भृशं पित्तं कुर्यात्सोपद्रवं ज्वरम् ।
निगृहीते तु पित्ते च भृशं वायुः प्रकुप्यति ॥३१॥
निराहारस्य सोऽत्यर्थं मेदो मज्जास्थि बाधते ।
अथाऽत्र स्नाति भुंक्ते वा त्रिरात्रं नहि जीवति ।
मेदोगतः सन्निपातः कफफणः स उदाहृतः ॥३२॥

कुम्भीपाकः प्रौर्णुनावः प्रलापी
हृन्तर्दाहो दण्डपातोऽन्तकश्च ।
एणीदाहश्चाथ हारिद्रसंज्ञो
भेदा एते सन्निपातज्वरस्य ॥ १ ॥
अजघोषभूतहासौ यन्त्रापीडश्च संन्यासः ।
संशोषी च विशेषास्तस्यैवोक्तास्त्रयोदशान्यत्र ॥ २ ॥
घोणाविवरगलद्बहुशोणासितलोहितं सार्ति ।
विलुठन्मस्तकमभितः कुम्भीपाकेन पीडितं विद्यात् ॥ १ ॥

उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्तान्नितान्तमुच्छ्वसिति ।
तं प्रौर्णुनावजुष्टं विचित्रकष्टं विजानीयात् ॥ २॥

स्वेदभ्रमाङ्गमर्दाः कम्पो दवथुर्वमिर्व्यथा कण्ठे ।
गात्रं च गुर्वतीव प्रज्ञापिजुष्टस्य जायते लिङ्गम् ॥ ३ ॥
अन्तर्दाहः शैत्यं वहिः श्वयथुररतिरपि तथा श्वासः ।
अङ्गमपि दग्धकल्पं सोऽन्तर्दाहार्दितः कथितः ॥ ४ ॥
नक्तं दिवा न निद्रामुपैति गृह्णाति मूढधीर्नभसः ।
उत्थाय दण्डपाते भ्रमातुरः सर्वतो भ्रमति ॥ ५ ॥
संपूर्यते शरीरं ग्रन्थिभिरभितस्तथोदरं मरुता ।
श्वासातुरस्य सततं विचेतनस्यान्तकार्त्तस्य ॥ ६ ॥
परिधावतीव गात्रे रुक्पात्रे भुजगपतंगहरिणगणः ।
वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ॥ ७ ॥
यस्यातिपीतमङ्गं नयने सुतरां मलं ततोऽप्यधिकम् ।
दाहोऽतिशीतता वहिरस्य स हारिद्रको ज्ञेयः ॥ ८ ॥
छगलकशरीरगन्धः स्कन्धरुजावान्निरुद्धगलरन्ध्रः ।
अजघोपसन्निपातादाताम्राक्षः पुमान्भवति ॥ ९ ॥
शब्दादीनधिगच्छति न स्वान्विषयान् यदिन्द्रियग्रामैः।
हसति प्रलपति परुषं स ज्ञेयो भूतहासार्त्तः ॥१०॥
येन मुहुर्ज्वरवेगाद्यन्त्रेणेवावपीड्यते गात्रम् ।
रक्तं पीतं च वमेद्यन्त्रापीडः स विज्ञेयः ॥११॥
अतिसरति वमति कूजति
गात्राण्यभितश्चिरं नरः क्षिपति ।
संन्याससन्निपाते प्रलपति
भुग्नाक्षिमण्डलो भवति ॥१२॥
मेचकवपुरतिमेचकलोचनयुगलो मलोत्सर्गात् ।
संशोषिणि सितपिटकामण्डलयुक्तो ज्वरो भवति ॥१३॥

## उत्पत्ति एवं सम्प्राप्ति

अम्लस्निग्धोष्णतीक्ष्णैः कटुमधुरसुरातापसेवाकषायैः
कामक्रोधातिरूक्षैर्गुरुतरपिशिताहारनीहारशीतैः ।
शोकव्यायामचिंताग्रहगणवनितात्यन्तसङ्गप्रसङ्गैः
प्रायः कुप्यन्ति पुंसां मधुसमयशरद्वर्षणे सन्निपाताः ॥ १ ॥

आमो ह्याहारदोषात्प्रथममुपचितो
हंति वह्निं शरीरे;
श्लेष्मत्वं याति भुक्तं सकलमपि ततो-
ऽसौ कफो वायुदुष्टः ।
स्रोतांस्यापूर्य्य रुंध्यादनिलमथ मरु-
त्कोपयेत्पित्तमन्तः ;
संमूर्च्छ्यान्योन्यमेते प्रबलमिति नृणां
कुर्वते सन्निपातम् ॥ २ ॥

संधिकश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ।
शीतांगस्तंद्रिकः प्रोक्तः कण्ठकुब्जश्च कर्णकः ॥ ३ ॥
विख्यातो भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ।
जिह्वकश्चेत्यभिन्यासः सन्निपातास्त्रयोदश ॥ ४ ॥
संधिके वासराः सप्त चान्तके दश वासराः ।
रुग्दाहे विंशतिर्ज्ञेया वह्न्यष्टौ चित्तविभ्रमे ॥ ५ ॥
पक्षमेकं तु शीताङ्गे तन्द्रिके पञ्चविंशतिः ।
विज्ञेया वासराश्चैव कण्ठकुब्जे त्रयोदश ॥ ६ ॥
कर्णके च त्रयो मासा भुग्ननेत्रे दिनाष्टकम् ।
रक्तष्ठीवी दशाहानि चतुर्दश प्रलापके ॥ ७ ॥

जिह्वके षोडशाहानि कलाऽभिन्यासलक्षणे ।
परमायुरिति प्रोक्तं म्रियते तत्क्षणादपि ॥ ८ ॥
सन्धिकस्तन्द्रिकश्चैव कर्णकः कण्ठकुब्जकः ।
जिह्वकश्चित्तविभ्रंशः षट् साध्याः सप्त मारकाः॥ ९ ॥
दोषे विवृद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥१०॥
मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता ।
यस्तु तत्र भवेज्जेता स जेताऽऽमयसंकुले ॥ ११ ॥
सन्निपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ।
कस्तेन न कृतो धर्मः कां च पूजां न सोऽर्हति ॥१२॥

## सन्निपात लक्षणानि

पूर्वरूपकृतशूलसम्भवं
शोषवातबहुवेदनान्वितम् ।
श्लेष्मतापबलहानिजागरं
सन्निपातमिति सन्धिकं वदेत् ॥ १ ॥

दाहं करोति परितापनमातनोति
मोहं ददाति विदधाति शिरःप्रकम्पम् ।
हिक्कां करोति कसनं च समाजुहोति
जानीहि तं विबुधवर्जितमन्तकाख्यम् ॥ २ ॥

प्रलापपरितापनप्रबलमोहमान्द्यश्रमः
परिभ्रमणवेदनाव्यथितकण्ठमन्याहनुः ।
निरन्तरतृषाकरश्वसनकासहिक्काकुलः
स कष्टतरसाधनो भवति हन्त रुग्दाहकः ॥ ३ ॥

यदि कथमपि पुंसां जायते कायपीड़ा
भ्रममदपरितापो मोहवैकल्यभावः ।
विकलनयनहासो गीतनृत्यप्रलापी
ह्यभिदधति असाध्यं केऽपि चित्तभ्रमाख्यम् ॥ ४ ॥
हिमसदृशशरीरो वेपथुः श्वासहिक्का
शिथिलितसकलाङ्गः खिन्ननादोग्रतापः ।
क्लमथुदवथुकासच्छर्द्यतीसारयुक्त-
स्त्वरितमरणहेतुः शीतगात्रप्रभावान् ॥ ५ ॥
प्रभूतातंद्रार्तिज्वरकफपिपासाकुलतरो
भवेत् श्यामा जिह्वा पृथुलकठिना कण्टकवृता ।
अतीसारः श्वासः क्लमथुपरितापः श्रुतिरुजो
भृशं कण्ठे जाड्यं शयनमनिशं तन्द्रिकगदे ॥ ६ ॥
शिरोऽर्तिकण्ठग्रहदाहमोह-
कंपज्वरा रक्तसमीरणार्त्तिः ।
हनुग्रहस्तापविलापमूर्च्छाः
स्यात्कण्ठकुब्जः खलु कष्टसाध्यः ॥ ७ ॥
प्रलापः श्रुतिह्रासकण्ठग्रहाङ्ग-
व्यथाश्वासकासप्रसेकप्रभावम् ।
ज्वरं तापकर्णान्तयोर्गल्लपीडा
बुधाः कर्णकं कष्टसाध्यं वदन्ति ॥ ८ ॥
ज्वरबलापचयः स्मृतिशून्यता
श्वसनभुग्नविलोचनमोहितः ।
प्रलपनभ्रमकंपनशोफवां-
स्त्यजति जीवितमाशु स भुग्नदृक् ॥ ९ ॥

रक्तष्ठीवी ज्वरवमितृषामोहशूलातिसारा
हिक्काध्मानभ्रमणदवथुश्वाससंज्ञाप्रणाशाः ।
श्यामा रक्ता भवति रसना मण्डलोत्थानरूपा
रक्तष्ठीवी निगदित इह प्राणहन्ता प्रसिद्धः ॥१०॥

कम्पप्रलापपरितापनशीर्षपीडा-
प्रौढप्रभावपवमानपरोऽन्यचिन्ता ।
प्रज्ञाप्रणाशविकलप्रचुरप्रवादः
क्षिप्रं प्रयाति पितृपालपदं प्रलापी ॥ ११ ॥

श्वसनकासपरितापविह्वलः
कठिनकण्टकपरीतजिह्वकः ।
बधिरमूकबलहानिलक्षणो
भवति कष्टतरसाध्यजिह्वकः ॥१२॥

दोषत्रयस्निग्धमुखत्वनिद्रा-
वैकल्यनिश्चेष्टनकष्टवाग्मी ।
बलप्रणाशः श्वसनादिनिग्रहो-
ऽभिन्यास उक्तो ननु मृत्युकल्पः ॥१३॥

## सन्निपातोपद्रव

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥१४॥

ज्वरस्य पूर्वं ज्वरमध्यतो वा
ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमादसाध्यः खलु कष्टसाध्यः
सुखेन साध्यो मुनिभिः प्रदिष्टः ॥१५॥

सद्यस्त्रिपंचसप्ताहाद्दशाहाद्द्वादशादपि ।
एकविंशद्दिनैः शुद्धः सन्निपाती सुजीवति ।।१६।।
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्ण लक्षणः ।
सन्निपाते ज्वरोऽसाध्यः, कृच्छ्र साध्यस्ततोऽन्यथा ।।२४।।
(सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा) ।।१।।
सप्तमी द्विगुणा चैवनवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ।।२।।
सन्निपात ज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथ संजायते तेन कश्चिदेव प्रमुच्यते ।।२५।।
(त्रयः प्रकुपिता दोषा उरः स्रोतोऽनुगामिनः ।
आमाभिवृद्ध्या ग्रथिता बुद्धीन्द्रियमनोगताः ।।१।।
जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम् ।
श्रुतोनेत्रे प्रसुप्तिः स्यान्न चेष्टांकांचिदीहते ।।२।।
न च दृष्टिर्भवेतस्य समर्था रूप दर्शने ।
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते ।।३।।
शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति ।
कूजति तुद्यते चैव परिवर्तनमीहते ।।४।।
अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते ।
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिध्यति ।।५।।
पित्तकफानिलवृद्ध्या
दशदिवसद्वादशाहसप्ताहात् ।
हन्ति विमुञ्चति पुरुषं
त्रिदोषजो धातुमलपाकात् ।।१।।

निद्राबलौजोरुचिवीर्यनाशो
हृद्वेदना गौरवतालपचेष्टा ।
विष्टंभता यस्य किलारतिः स्यात्
स धातुपाकी मुनिभिः प्रदिष्टः ॥ २ ॥
दोषप्रकृतिवत्कृत्य लघुता ज्वरदेहयोः ।
इन्द्रियाणां च वैमल्यं दोषाणां पाकलक्षणम् ॥ ३ ॥
अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥२६॥
श्यावास्यता विषकृते‡ दाहोऽतीसार एव च ।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥२७॥
ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ।
कामजे चित्तविभ्रंशस्तन्द्रालऽऽस्यमभोजनम् ॥२८॥
(हृदये वेदना चास्य गात्रं च परिशुष्यति)
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ।
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥२९॥
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ।
कामशोकभयाद्वायुः, क्रोधात्पित्तं, त्रयो मलाः ॥३०॥
भूताभिषङ्गात्कुप्यन्ति भूतसामान्य लक्षणाः ।
दोषोऽल्पोऽहित संभूतो ज्वरोत्सृष्टस्य वा पुनः ॥३१॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम्
( सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ । )
संततं रसरक्तस्थः, सोऽन्येद्युः पिशिताश्रितः ॥३२॥

---

‡ 'तथातीसार' पाठान्तरम

मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ।
कुर्य्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ॥३३॥
(स्रोतोभिर्विसृता दोषा गुरवो रस वाहिभिः ।
सर्वदेहानुगाः स्तब्धा ज्वरं कुर्वन्ति संततम् ॥ )
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
संतत्या योऽविसर्गी स्यात्संततः स निगद्यते ॥३४॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।
अन्येद्युष्कस्त्वहोरात्रमेककालं प्रवर्त्तते ॥३५॥
तृतीयकस्तृतीयेऽह्नि, चतुर्थेऽह्नि चतुर्थकः ।
केचिद् भूताभिषंगोत्थं ब्रुवते विषमज्वरम् ॥३६॥
कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥३७॥
चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ।
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसंभवः ॥३८॥
विषमज्वर एवान्यश्चतुर्थकविपर्ययः ।
स मध्ये ज्वरयत्यह्नी ह्यादावन्ते विमुञ्चति ॥३९॥
नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति ।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥४०॥
प्रलिम्पन्निव गात्राणि धर्मेण गौरवेण च ।
मन्दज्वरविलेपी च सशीतः स्यात्प्रलेपकः ॥४१॥
विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ।
तेनार्धं शीतलं देहेचार्धंचोष्णं प्रजायते ॥४२॥
काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः ।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः ॥४३॥

कायै श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम् ।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः ॥४४॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥४५॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ।
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥४६॥
द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥४७॥
गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥४८॥
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ।
प्रलापः पिडका :तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥४९॥
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ।
ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥५०॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥५१॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च ।
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥५२॥
तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ।
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥५३॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।
शेफसः स्तब्धता मोक्षः शुक्रस्य च विशेषतः ॥५४॥
(रस रक्ताश्रितः साध्योमांसमेदोगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रेशुक्रस्थस्तु न सिध्यति ) ॥१॥

वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥५५॥
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्यात्पित्तं च शरदि तस्य चानुबलः (लं) कफः ॥५६॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥५७॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।
निदानोक्तानुपशयो विपरीतोपशायिता ॥५८॥
अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥५९॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ।
सन्तापोऽह्यधिको बाह्यस्तृष्णादीनां च मार्दवम् ॥६०॥
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ।
लालाप्रसेकहृल्लासहृदयाशुद्ध्यरोचकाः ॥६१॥
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ।
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः ॥६२॥
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ।
भेषजं ह्यामदोषस्य भूयो ज्वलयति* ज्वरम् ॥६३॥
(शोधनं शमनीयं च करोति विषमज्वरम् ।
श्वासो मूर्च्छाऽरुचिस्तृष्णा छर्द्यतीसारविड्ग्रहः ॥१॥
हिक्का श्वासोऽङ्गदाहश्च ज्वरस्योपद्रवा दश )॥
ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।

* 'जनयति' पाठान्तर

मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥६४॥
क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो* निरामज्वरलक्षणम् ॥६५॥
(त्रिः सप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते) ॥ १ ॥
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ॥६६॥
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ।
ज्वरःक्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ॥६७॥
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ।
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥६८॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ।
आरम्भाद्विषमो यस्तु यश्च वा दैर्घरात्रिकः ॥६९॥
क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम् ।
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ॥७०॥
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ।
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥७१॥
वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ।
हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ॥७२॥
संततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ।
हतप्रभेन्द्रियं क्षीणमरोचकनिपीडितम् ॥७३॥
गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत् ।

---

* 'दोषप्रवृत्तिरुत्साहो' इत्यातङ्कदर्पणसंमतः पाठः

दाहः स्वेदो भ्रमस्तृष्णा कम्पो विड्भिदसंज्ञिता ।
कूजनं चास्यवैगन्ध्यमाकृतिर्ज्वरमोक्षणे ॥७४॥
स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च ।
क्षवथुश्चान्नकांक्षा च ज्वरमुक्तस्य लक्षणम् ॥७५॥
( देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवःप्रकृतियोगिमनोऽन्नलिप्सा ।
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ) ॥ १ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने ज्वरनिदानं समाप्तम् ॥ २ ॥

## अथातीसारनिदानम् ।

गुर्वतिस्निग्ध*रूक्षोष्णद्रवस्थूलातिशीतलैः ।
विरुद्धाध्यशनाजीर्णविषमैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्तुपर्ययैः ॥ २ ॥
जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥
संशम्यापां धातुरग्निं प्रवृद्धः
+शकृन्मिश्रो वायुनाऽधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहु-
र्व्याधिंघोरं षड्विधं तं वदन्ति ।
एकैकशः सर्वशश्चापि दोषैः
शोकेनान्यः षष्ठ आमन चोक्तः ॥ ४ ॥

*'तीक्ष्णोष्ण' पाठान्तर +'वर्चोमिश्रो' पाठान्तर

हृन्नाभिपायूदरकुक्षितोद-
गात्रावसादानिलसन्निरोधाः ।
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ५ ॥
अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ६ ॥
पित्तात्पीतं नीलमालोहितं वा
तृष्णामूर्च्छादाहपाकोपपन्नम् ।
शुक्लं सांद्रं श्लेष्मणा श्लेष्मयुक्तं
विस्रं शीतं हृष्टरोमा मनुष्यः ॥ ७ ॥
वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ।
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ८ ॥
तैस्तैर्भावैः शोचतोऽल्पाशनस्य
बाष्पोष्मा वै वह्निमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात्काकणन्तीप्रकाशम् ॥ ९ ॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा
निर्गन्धं वा गन्धवद्वाऽतिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥१०॥
अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः
कोष्ठं दोषा धातुसङ्घान्मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥११॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥१२॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।
लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥१३॥
पक्वंजाम्बवसङ्काशं यकृत्पिण्डनिभं तनु ।
घृततैलवसामज्जवेशवारपयोदधि ॥१४॥
मांसधावनतोयाभं कृष्णं नीलारुणप्रभम् ।
मेचकं स्निग्ध कर्बूरं चन्द्रकोपगतं घनम् ॥१५॥
कुणपं मस्तुलुङ्गाभं× सुगन्धिं÷ कुथितं बहु ।
तृष्णादाहतमः‡श्वासहिक्कापार्श्वास्थिशूलिनम् ॥१६॥
संमूर्च्छारतिसंमोहयुक्तं पक्वलीगुदम् ।
प्रलापयुक्तं च भिषग् वर्जयेदतिसारिणम् ॥१७॥
असंवृतगुदं क्षीणं दूराध्मातमुपद्रुतम् ।
गुदे पक्वे गतोष्माणमतिसारकिणं त्यजेत् ॥१८॥
(शोथं शूलं ज्वरं तृष्णां श्वासकासमरोचकम् ।
छर्दिं मूर्च्छां च हिक्कां च दृष्ट्वाऽतीसारिणं त्यजेत् ॥१॥)
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितम् ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥१९॥
पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके ।
तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्वणः ॥२०॥
वायुः प्रवृद्धो निचितं बलासं
नुदत्यधस्तादहिताशनस्य ।

× मातु लुङ्गाभं ÷ दुर्गन्धं ‡ तृषादाहारुचि

प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिकां तां प्रवदंति तज्ज्ञाः ॥२१॥
प्रवाहिका वातकृता सशूला
पित्तात्सदाहा सकफा कफाच्च ।
सशोणिता शोणितसम्भवा च
ताः स्नेहरूक्षप्रभवा मतास्तु ।
तासामतीसारवदादिशेच्च
लिङ्गं क्रमं चामविपकतां च ॥२२॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥२३॥
ज्वरातीसारयोरुक्तं निदानं यत्पृथक् पृथक् ।
तस्यज्वरातिसारस्य तेन नात्रोदितं पुनः ॥ १ ॥
इति श्रीमाधवकरविरचिते माधवनिदानेऽतीसार-
निदानं समाप्तम् ॥३॥

## अथ ग्रहणीरोग निदानम् ।

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ २ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ३ ॥
पूर्वरूपं तु तस्येदं तृष्णाऽऽलस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ॥ ४ ॥

कटुतिक्तकषायातिरूक्षसंदुष्टभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥ ५ ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥ ६ ॥
कंठास्यशोषोऽक्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवंक्षणग्रीवारुगभीक्ष्णं विसूचिका ॥ ७ ॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं* तथा ॥ ८ ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ ९ ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनःपुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥१०॥
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
आप्लावयेद्धन्त्यनलं जलं तप्तमिवानलम् ॥११॥
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥१२॥
गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥१३॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्यकासष्ठीवनपीनसाः ॥१४॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।

* 'स्पन्दनम्' पाठान्तर

दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥१५॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥१६॥
पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥१७॥
( अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा ।
द्रवं शीतं घनं स्निग्धं सकटीवेदनं शकृत् ॥ १ ॥
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा नित्यं वाऽप्यथ मुञ्चति ॥ २ ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा ।
दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी॥ ३ ॥
सा भवेदामवातेन संग्रहग्रहणी मता ।
स्वपतः पार्श्वयोः शूलं गलज्जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥ ४ ॥ )
दोषं सामं निरामं च विद्यादत्रातिसारवत् ॥१८॥
लिङ्गैरसाध्यो ग्रहणीविकारो
यैस्तैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनूं नैव निवर्तते च ॥१९॥
(बालके ग्रहणी साध्या यूनि कृच्छ्रा समीरिता ।
वृद्धे त्वसाध्या विज्ञेया मत धन्वन्तरेरिदम् ॥ १ ॥)
इति श्रीमाधवकर विरचिते माधवनिदाने ग्रहणीनिदानं
समाप्तम् ॥ ४ ॥

## अथार्शोनिदानम् ।

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥

दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि ताञ्जगुः ॥ २ ॥
कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ॥ ३ ॥

लंघनं देशकालौ च शीतौ व्यायाम कर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ ४ ॥
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः × ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥

विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥ ७ ॥

प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समम् ॥ ९ ॥

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥१०॥

---

× 'श्रमाः' पाठान्तर

मिथोविसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
विम्बीखर्जूरकर्कन्धूकार्पासीफलसन्निभाः ॥११॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरःपार्श्वांसकट्यूरुवंक्षणाद्यधिकव्यथाः ॥१२॥
क्षवथूद्गारविष्टंभहृद्ग्रहारोचकप्रदाः ।
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥१३॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥१४॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥१५॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥१६॥
शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ।
दाहपाकज्वरस्वेदतृण्मूर्च्छाऽरुचिमोहदाः ॥१७॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥१८॥
श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचितस्निग्धस्तब्धवृत्तगुरुस्थिराः ॥१९॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाःकण्ड्वाढ्याः स्पर्शनप्रियाः।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥२०॥
वंक्षणानाहिनः पायुवस्तिनाभिविकर्षिणः ।
सश्वासकासहृल्लासप्रसेकारुचिपीनसाः ॥२१॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥२२॥

वसाभसकफप्रायपुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥२३॥
सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ।
रक्तोल्बणा गुदेकीलाः पित्ताकृतिसमन्विताः॥२४॥
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ।
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः ॥२५॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ।
भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ॥२६॥
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ।
विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्त्तते ॥२७॥
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ।
कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ॥ २८॥
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ।
शिथिलं श्वेतपीतं च विट् स्निग्धं गुरु शीतलम् ॥२९॥
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डु पिच्छिलम्।
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥३०॥
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥३१॥
ग्रहणीदोषपांड्वर्त्तेराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥३२॥
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्वे एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥३३॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।

सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥३४॥
बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥३५॥
द्वंद्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥३६॥

सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥३७॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥३८॥

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ॥३९॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥४०॥

तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम्।
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि ॥४१॥
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं, नाभिजानि च।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥४२॥

व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः।
कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ॥४३॥
वातेन तोदपारुष्यं पित्तादसितवक्त्रता।
श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता ॥४४॥

इति श्रीमाधवकरविरचिते माधवनिदानेऽर्शोनिदानं
समाप्तम् ॥५॥

## अथाग्निमान्द्याजीर्णविसूचिकालसकविलम्बिका-निदानम् ।

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १ ॥
विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥ २ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पाऽपि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ।
मात्राऽतिमात्राऽप्यशिता सुखं यस्य विपच्यते ॥
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ॥ ४ ॥
(नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥ १ ॥
तदा लब्धबलो देहं विरुजेत् × सानिलोऽनलः ।
अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ २ ॥
पक्त्वाऽन्नं स ततो धातूञ्छोणितादीन्पचत्यपि ।
ततो दौर्बल्यमातङ्कान् मृत्युं चोपनयेन्नरम् ॥ ३ ॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति ।
तृट्कासदाहमूर्च्छाःस्युर्व्याधयोऽत्यग्निसंभवाः ॥४॥)
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५ ॥
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ६ ॥

× 'रूक्षं यत् सानिलोऽनलः' पाठान्तर

(भुक्त्वा पादशतं गत्वा वामपार्श्वेतु संविशेत् ।
शब्दरूपरसस्पर्शगन्धांश्च मनसः प्रियान् ॥
भुक्त्वानुपसेवेत तेनान्नं साधु तिष्ठति ॥ १ ॥ )
अत्यम्बुपानाद्विषमाशनाच्च
सन्धारणात् स्वप्नविपर्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥ ७ ॥
ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति ॥ ८ ॥
मात्रयाऽप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति ।
चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ९ ॥
तत्रामे गुरुतोत्क्लेदः शोथोगण्डाक्षिकूटगः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते ॥ १० ॥
विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ ११ ॥
विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥ १२ ॥
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ।
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥ १३ ॥
अनात्मवन्तः पशुवद् भुञ्जते येऽप्रमाणतः ।
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ १४ ॥
अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १५ ॥

सूचीभिरिव गात्राणि तुदन् संतिष्ठतेऽनिलः।
यत्राजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ॥१६॥
न तां परिमिताहारा लभन्ते विदितागमाः।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥१७॥
मूर्च्छाऽतिसारो वमथुः पिपासा
शूलो भ्रमोद्वेष्टनजृम्भदाहाः।
वैवर्ण्यकंपौ हृदये रुजश्च
भवन्ति तस्यां शिरसश्च भेदः ॥१८॥
कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति।
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥१९॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि।
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु ॥२०॥
दुष्टं तु भुक्तं कफमारुताभ्यां
प्रवर्तते नोर्ध्वमधश्च यस्य।
विलम्बिकां तां भृशदुश्चिकित्स्या-
माचक्षते शास्त्रविदः पुराणाः ॥२१॥
यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥२२॥
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो
वम्यर्दितोऽभ्यन्तरयातनेत्रः।
क्षामस्वरः सर्वविमुक्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥२३॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गौ यथोचितः।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥२४॥

निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता।
अमी ह्युपद्रवा घोरा विसूच्यां पञ्च दारुणाः ॥२५॥
प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्।
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ॥२६॥
ग्लानिगौरवविष्टम्भभ्रममारुतमूढताः।
विबन्धो वा प्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥२७॥

इति श्रीमाधवकरविरचिते माधवनिदानेऽग्निमान्द्या-जीर्णविसूचिकालसकविलम्बिकानिदानं समाप्तम् ॥६॥

## अथ क्रिमिनिदानम्।

क्रिमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः।
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥ १ ॥
नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः।
द्विधा ते कोठपिडकाकण्डूगण्डान्प्रकुर्वते ॥ ३ ॥
अजीर्णभोजी मधुराम्लनित्यो
द्रवप्रियः पिष्टगुडोपभोक्ता।
व्यायामवर्जी च दिवाशयानो
विरुद्धभुक्संलभते क्रिमींस्तु ॥ ४ ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः।
मांसमत्स्यगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥ ५ ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि।
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥ ६ ॥

भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम् ।
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥ ७॥

पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ।
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ॥ ८॥
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ।
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः* ॥ ९॥

चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ।
हृल्लासमास्यस्रवणमविपाकमरोचकम् ॥१०॥
मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथु× पीनसान् ।
रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः ॥११॥

अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ।
केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥१२॥

पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
प्रवृद्धाः स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ॥१३॥
तदाऽस्योद्गारनिःश्वासा विड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥१४॥

ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ।
सौसुरादाः + सशूलाख्या लेलिहा जनयन्ति हि ॥१५॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।

---

* महारुजः × 'तृषानाह कार्श्यश्वयथु'
+ 'सौसुरादामलूनाश्च'

रोमहर्षाग्निसदनं गुदकण्डूर्विमार्गगाः ॥१६॥

इति श्रीमाधवकरविरचिते माधवनिदाने क्रिमिनिदानं समाप्तम् ॥ ७ ॥

## अथ पाण्डुरोगकामलाकुम्भकामलाहलीमक-निदानम् ।

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ १ ॥
व्यायाममम्लं * लवणानि मद्यं
मृदं दिवास्वप्नमतीव तीक्ष्णम् ।
निषेवमाणस्य प्रदूष्य रक्तं
दोषास्त्वचं पाण्डुरतां नयन्ति ॥ २ ॥
त्वक्स्फोटनष्ठीवनगात्रसाद-
मृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको
भविष्यतस्तस्य पुरः सराणि ॥ ३ ॥
त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभताः ।
वातपाण्ड्वामये तोदकम्पानाहभ्रमादयः ॥ ४ ॥
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामयी नरः॥ ५ ॥
कफप्रसेकश्वयथुतन्द्रालस्याति गौरवैः ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥ ६ ॥

---

* 'व्यवायमम्लं' इति पाठाभिप्रायेण ।

ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः ।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ ७ ॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मल : ।
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ ८ ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद् भुक्तं च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥ ९ ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ १० ॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।
क्रिमिकोष्ठोऽतीसार्य्येत मलं सासृक्कफान्वितम् ॥ ११ ॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिद्धयति ।
कालप्रकर्षाच्छूनानां × यो वा पीतानि पश्यति ॥ १२ ॥
बद्धाल्पविट् सहरितं सकफं योऽतिसार्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृडर्दितः ॥ १३ ॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुःश्वेतत्वमाप्नुयात् ।
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् ।
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ॥ १४ ॥
अंतेषु शूनं परिहीणमध्यं
म्लानं तथाऽन्तेषु च मध्यशूनम् ।
गुदे च शेफस्यथ मुष्कयोश्च
शूनं प्रताम्यन्तमसंज्ञकल्पम् ।
विवर्जयेत्पाण्डुकिनं यशोऽर्थी
तथाऽतिसारज्वरपीडितं च ॥ १५ ॥

× 'कालप्रकर्षाच्छूनाङ्गो' पाठान्तर ।

(अन्ते शूनः कृशो मध्ये ऽन्यथा च गुदशेफसि।
शूनो ज्वरातिसारार्तोमृतकल्पस्तु पालकी॥ १॥)
पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते॥१६॥
हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः॥१७॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता॥१८॥
कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला।
कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः॥१९॥
सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति।
दाहारुचितृडानाहतन्द्रामोहसमन्वितः॥२०॥
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते।
छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः॥२१॥
नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली।
यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः॥२२॥
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः।
स्त्रीष्वहर्षोऽङ्गमर्दश्च दाहस्तृष्णाऽरुचिर्भ्रमः।
हलीमकं तदा तस्य विद्यादनिलपित्ततः॥२३॥
(सन्तापो भिन्नवर्चस्त्वं बहिरन्तश्च पीतता।
पाण्डुता नेत्रयोर्यस्य पानकीलक्षणं भवेत्॥१॥)

इति श्रीमाधवकरविरचिते माधवनिदाने पाण्डुरोग-
कामलाकुम्भकामलाहलीमकनिदानं समाप्तम्॥८॥

## अथ रक्तपित्तनिदानम् ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥ १ ॥
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ।
ततःप्रवर्त्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ॥ २ ॥
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥ ३ ॥
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥ ४ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।
श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ५ ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ ६ ॥
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ।
ऊर्ध्वगं कफसंसृष्टमधोगं पवनानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्त्तते ॥ ७ ॥
ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ।
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ॥ ८ ॥
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥ ९ ॥
यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥१०॥
दौर्बल्यश्वासकासज्वरवमथुमदाः
पाण्डुता दाहमूर्च्छा,

भुक्ते घोरो विदाहस्त्वधृतिरपिसदा
हृद्यतुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं
पूतिनिष्ठीवनत्वं,
भक्तद्वेषाविपाकौ विकृतिरपि भवे-
द्रक्तपित्तोपसर्गाः ॥११॥
मांसप्रक्षालनाभं कुथितमिव च यत्
कर्दमाम्भोन्निभं वा,
मेदः पूयास्रकल्पं यकृदिव यदि वा
पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं
यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा
यच्च तुल्यं विभाति ॥१२॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद् दृश्यं वियच्चापि तच्चासाध्यमसंशयम् ॥१३॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥१४॥
इति श्रीमाधवकरविरचिते माधवनिदाने रक्तपित्तनिदानं
समाप्तम् ॥ ९ ॥

## अथ राजयक्ष्मक्षतक्षीणनिदानम् ।

वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥ १ ॥

कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् ।
निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः ॥ ३ ॥
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ।
शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद्रुजम् ॥ ४ ॥
स यं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।
तत्र विद्याद्रुजं, मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ५ ॥
कोष्ठे विबंधवमथुस्तनदंशान्त्रकूजनैः ।
आध्मानपृष्ठनमनजठरोन्नमनैरपि ॥ ६ ॥
बस्तौ गुह्ये च विण्मूत्रसङ्गत्रासदिगीक्षणैः ।
स्रोतांस्यंगानि संधींश्च पश्येद्यत्नान्मुहुर्मुहुः ॥ ७ ॥
(द्विलिङ्गं द्वन्द्वजं विद्यात्सर्वलिङ्गं त्रिदोषजे ।)
कुकूणकः क्षीरदोषाच्छिशूनामेव वर्त्मनि ।
जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः ॥ ८ ॥
शिशुः कुर्याल्ललाटाक्षिकूटनासावघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ ९ ॥
मातुः कुमारो गर्भिण्याः स्तन्य प्रायः पिबन्नपि ।
कासाग्निसादवमथुतंद्राकार्श्यारुचिभ्रमैः ॥१०॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम् ॥११॥
तालुमांसे कफः क्रुद्धः कुरुते तालुकंटकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥१२॥
तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् ।
तृडक्षिकंठास्यरुजा ग्रीवादुर्धरता वमिः ॥१३॥

* 'शूनः शुक्लाक्षश्छर्दनः शिशुः'

विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥१४॥

शंखाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत्।
क्षुद्ररोगे च कथितं त्वजगल्ल्यहिपूतने ॥१५॥

ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः।
बालदेहेऽपि ते तद्वद्विज्ञेयाः कुशलैः सदा ॥१६॥

क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव वा ॥१७॥
ऊर्ध्वं निरीक्षते दन्तान् खादेत्कूजति जृम्भते।
भ्रुवौ क्षिपति दंतौष्ठं फेनं वमति चासकृत् ॥१८॥

क्षामोऽति निशि जागर्ति शूनाक्षो भिन्नविट्स्वरः।
मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा ॥१९॥

सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम्।
एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकंपनम् ॥२०॥
ऊर्ध्वं दृष्टया निरीक्षेत वक्रास्यो रक्तगंधिकः।
दंतान् खादति वित्रस्तः स्तन्यं नैवाभिनंदति ॥२१॥

स्कंदग्रहगृहीतानां रोदनं चाल्पमेव च।
नष्टसंज्ञो वमेत्फेनं संज्ञावानतिरोदिति।
पूयशोणितगन्धित्वं स्कंदापस्मारलक्षणम् ॥२२॥

स्रस्तांगो भयचकितो विहंगगन्धिः
सास्रावव्रणपरिपीडितः समन्तात्।
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥२३॥

व्रणैः स्फोटैश्चितं गात्रं पंकगंधं स्रवेदसृक्।
भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥२४॥
अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम्।
नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥२५॥
छर्दिः कासो ज्वरस्तृष्णा वसागंधोऽतिरोदनम्।
स्तन्यद्वेषोऽतिसारश्च अंधपूतनया भवेत् ॥२६॥
वेपते कासते क्षीणो नेत्ररोगो विगंधिता।
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥२७॥
प्रसन्नवर्णवदनः सिराभिरभिसंवृतः।
मूत्रगन्धी च बह्वाशी मुखमण्डिकया भवेत् ॥२८॥
छर्दिस्पं (स्यं) दनकण्ठास्यशोषमूर्च्छाविगन्धिताः।
ऊर्ध्वं पश्येद्दशेद्दन्तान्नैगमेयग्रहं वदेत् ॥२९॥
ग्रस्तश्चाक्षः स्तनद्वेषी मुह्यते चानिशं मुहुः।
तं बालमचिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥३०॥

इति श्रीमाधकरविरचिते माधवनिदाने बालरोग-
निदानं समाप्तम् ॥६८॥

## अथ विषरोगनिदानम्।

स्थावरं जंगमं चैव द्विविधं विषमुच्यते।
मूलाद्यात्मकमाद्यं स्यात्परं सर्पादिसम्भवम् ॥ १ ॥
(दशाधिष्ठानमाद्यं स्याद् द्वितीयं षोडशाश्रयम्।
मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सार एव च ॥ १ ॥
निर्यासा धातवश्चैव कन्दश्च दशमः स्मृतः।
जंगमस्य विषस्योक्तान्यधिष्ठनानि षोडश।

समासेन मया यानि विस्तरस्तेषु वक्ष्यते ॥ २ ॥)
निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।
शोथं चैवातिसारं च जंगमं कुरुते विषम् ॥ २ ॥
स्थावरं च ज्वरं हिक्कां दंतहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते भृशम् ॥ ३ ॥
इंगितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ४ ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥ ५ ॥
हसत्यकस्मात्स्फोटयत्यंगुलीर्विलिखेन्महीम् ।
वेपथुश्चास्य भवति त्रस्तश्चान्योन्यमीक्षते ॥ ६ ॥
विवर्णवक्त्रो ध्यामश्च नखैः किंचिच्छिनत्त्यपि ।
आलभेतासनं दीनः करेण च शिरोरुहम् ॥ ७ ॥
वर्तते विपरीतं च विषदाता विचेतनः ।
उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
जृम्भणं वेपनं श्वासो मोहः पत्रविषेण तु ।
मुष्कशोथः* फलविषैर्दाहोऽन्नद्वेष एव च ॥ ९ ॥
भवेत् पुष्पविषैश्छर्दिराध्मानं श्वास एव च ।
त्वक्सारनिर्यासविषैरुपयुक्तैर्भवंति हि ॥१०॥
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ।
फेनागमः क्षीरविषैर्विड्भेदो गुरुगात्रता + ॥११॥

---

* 'मुखशोथः' + 'गुरुजिह्वता'

हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥१२॥
सद्यः क्षतं पच्यते यस्य जंतोः
स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ।
कृष्णीभूतं क्लिन्नमत्यर्थपूति
क्षतान्मांसं शीर्यते चापि यस्य ॥१३॥
तृष्णा मूर्च्छा ज्वरदाहौ च यस्य
दिग्धाहतं तं पुरुषं व्यवस्येत् ।
लिंगान्येतान्येव कुर्यादमित्रै-
र्व्रणे विषं यस्य दत्तं प्रमादात् ॥१४॥
सपीतं गृहधूमाभं पुरीषं योऽति सार्यते ।
फेनमुद्वमते चापि विषपीतं तमादिशेत् ॥१५॥
वातपित्तकफात्मानो भोगिमण्डलिराजिलाः ।
यथाक्रमं समाख्याता, द्व्यन्तरा द्वंद्वरूपिणः ॥१६॥
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत् ।
पीतो मण्डलिजः शोथो मृदुः पित्तविकारवान् ॥१७॥
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारकृत् ॥१८॥
अश्वत्थदेवायतनश्मशान-
वल्मीकसंध्यासु चतुष्पथेषु ।
याम्ये च दष्टाः परिवर्जनीया-
ऋक्षे शिरामर्मसु ये च दष्टाः ॥१९॥
दर्वीकराणां विषमाशु घाति
सर्वाणि चोष्णे द्विगुणीभवन्ति ।

अजीर्णपित्तातपपीडितेषु
बालेषु वृद्धेषु बुभुक्षितेषु ॥२०॥
क्षीणक्षते मेहिनि कुष्ठयुक्ते
रूक्षेऽबले गर्भवतीषु चापि ।
शस्त्रक्षते यस्य न रक्तमेति
राज्यो लताभिश्च न सम्भवन्ति ॥२१॥
शीताभिरद्भिश्च न रोमहर्षो
विषाभिभूतं परिवर्जयेत्तम् ।
जिह्मं मुखं यस्य च केशशातो
नासावसादश्च सकंठभंगः ॥२२॥
कृष्णः सरक्तः श्वयथुश्च दंशे
हन्वोः स्थिरत्वं च विवर्जनीयः ।
वर्तिर्घना यस्य निरेति वक्त्रा-
द्रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥२३॥
दंष्ट्रानिपाताश्चतुरश्च यस्य
तं चापि वैद्यः परिवर्जयेच्च ।
उन्मत्तमत्यर्थमुपद्रुतं वा
हीनस्वरं वाऽप्यथवा विवर्णम् ॥२४॥
सारिष्टमत्यर्थमवेगिनं च
ज्ञात्वा नरं कर्म न तत्र कुर्यात् ।
जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितं वा ॥२५॥
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति ।

वीर्याल्पभावान्न निपातयेत्तत्
कफान्वितं वर्षगणानुबंधि ॥२६॥

तेनार्दितो भिन्नपुरीषवर्णो
वैगंध्यवैरस्ययुत: पिपासी ।
मूर्च्छा भ्रमं गद्गदवाग्वमिं च
विचेष्टमानोऽरतिमाप्नुयाद्वा ॥२७॥

आमाशयस्थे कफवातरोगी,
पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेत्समुद्ध्वस्तशिरोरुहांगो
विलूनपक्षस्तु यथा विहंगः ॥२८॥

स्थितं रसादिष्वथवा यथोक्तान्
करोति धातुप्रभवान् विकारान् ।
कोपं च शीतानिलदुर्दिनेषु
यात्याशु, पूर्वं शृणु तस्य रूपम् ॥२९॥

निद्रागुरुत्वं च विजृम्भणं च
विश्लेषहर्षावथवाऽङ्गमर्दम् ।
ततः करोत्यन्नमदाविपाका-
वरोचकं मण्डलकोठजन्म ॥३०॥

मांसक्षयं पादकरप्रशोथं
मूर्च्छां तथा छर्दिमथातिसारम् ।
दूषीविषं श्वासतृषाज्वरांश्च
कुर्यात् प्रवृद्धिं जठरस्य चापि ॥३१॥

उन्मादमन्यज्जनयेत्तथाऽन्य-
दानाहमन्यत्क्षपयेच्च शुक्रम् ॐ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं
तांस्तान्विकारांश्च बहुप्रकारान् ॥३२॥
दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः।
यस्मात्संदूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम् ॥३३॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्।
दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥३४॥
सौभाग्यार्थं स्त्रियः स्वेदं रजो नानांगजान्मलान्।
शत्रुप्रयुक्तांश्च गरान्प्रयच्छंत्यन्नमिश्रितान् + ॥३५॥
तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ÷।
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥३६॥
जठरं ग्रहणीदोपो यक्ष्मा गुल्मः क्षयो ज्वरः।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥३७॥
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिंदवः।
तस्माल्लूतास्तु भाष्यन्ते संख्यया ताश्च षोडश ॥३८॥
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥३९॥
पिडका विविधाकारा मण्डलानि महांति च।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥४०॥
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम्।

---

ॐ 'दाहं तथान्यत्' + 'प्रयच्छन्त्यन्नमाश्रितान्'
÷ 'ज्वरश्चास्योपजायते'

दंशमध्ये तु यत्कृष्णं श्यावं वा जालकाचितम् ॥१४॥
ऊर्ध्वाकृति भृशं पाकं क्लेदशोथज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥४२॥
(सर्पाणामेव विण्मूत्रशवकोथसमुद्भवाः ।
दूषीविषाः प्राणहरा इति संक्षेपतो मताः ॥१॥)
शोथः श्वेताःसिता रक्ताः पीता वा पिडका ज्वरः।
प्राणान्तिकाश्च जायन्ते श्वासहिक्काशिरोग्रहाः + ॥४३॥
आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥४४॥
मूर्च्छाऽङ्गशोथ वैवर्ण्य क्लेदशब्दाश्रुतिर्ज्वराः ।
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः ॥४५॥
कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव वा ।
मोहोऽथ वर्चसो भेदो दष्टे स्यात्कृकलासकैः॥४६॥
दहत्यग्निरिवादौ च भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात्तुतिष्ठति ॥४७॥
दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥४८॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ।
लक्षणं कणभैर्दष्टे दंशश्चैवावसीदति ॥४९॥
हृष्टलोमोच्चिटिङ्गेन स्तब्धलिंगो भृशार्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यंगानि मन्यते ॥५०॥
एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् ।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥५१॥

+ 'दाहहिक्का शिरोग्रहाः' ॐ'स्याचकृकण्टकैः'

मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥५२॥
विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ।
दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम् ॥५३॥
कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः ।
असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥५४॥
सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।
पिडका मक्षिकादंशे तासां तु स्थविकाऽसुहृत् ॥५५॥
चतुष्पद्भिर्द्विपद्भिश्च नखदन्तविषं च यत् ।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥५६॥
श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदाऽनिलः ।
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥५७॥
तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान् ।
अव्यक्तबधिरान्धश्च सोऽन्योन्यमभिधावति ॥५८॥
प्रमूढोऽन्यतमस्त्वेषां खादन्विपरिधावति ।
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ॥५९॥
सुप्तता जायते दंशे कृष्णं चातिस्रवत्यसृक् ।
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥६०॥
येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ।
अप्सु चादर्शबिम्बे वा तस्य तद्रिष्टमादिशेत् ॥६२॥
त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वाऽपि वा जलम् ।
जलत्रासं तु तं विद्याद्रिष्टं तदपि कीर्त्तितम् ॥६३॥
अदष्टो वा जलत्रासी न कथंचन सिद्ध्यति ।
प्रसुप्तो वोत्थितो वाऽपि स्वस्थस्त्रस्तो न सिद्ध्यति ॥६४॥

प्रशान्तदोषं प्रकृतिस्थधातु-
मन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥६५॥
इति श्रीमाधवकरविरचिते माधवनिदाने विषनिदानं
समाप्तम् ॥६९॥

## परिशिष्ट (ग्रन्थशेष) ।

अथ ध्वजभंगादि रोगाः
रेतोदोषोद्भवं क्लैब्यं यस्माच्छुद्धयैव सिध्यति ।
अतो वक्ष्यामि ते सम्यगग्निवेश यथातथम् ॥ १ ॥
बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
वैक्लव्यसम्भवस्तस्य शृणु सामान्यलक्षणम् ॥ २ ॥
संकल्पप्रवणो नित्यं प्रियां वश्यामथापि वा ।
न याति लिङ्गशैथिल्यात्कदाचिद्याति वा पुमान् ॥ ३ ॥
श्वासार्तः स्विन्नगात्रांसो मोघसंकल्पचेष्टितः ।
म्लानशिश्नश्च निर्बीजः स्यादेतत्क्लैब्यलक्षणम् ॥ ४ ॥
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ।
शीतरूक्षाम्लसंक्लिष्ट विषमासात्म्यभोजनात् ॥ ५ ॥
शोकचिन्ताभयत्रासात्स्त्रीणां चात्यर्थसेवनात् ।
अभिचारादविस्रम्भाद्रसादीनां च संक्षयात् ॥ ६ ॥
वातादीनां च वैषम्याद्विरुद्धाध्यशनाच्छ्रमात् ।
नारीणामनभिज्ञत्वात्पंचकर्मापचारतः ॥ ७ ॥
बीजोपघातो भवति पाण्डुवर्णः सुदुर्बलः ।
अल्पप्रजोऽल्पहर्षश्च प्रमदासु भवेन्नरः ॥ ८ ॥

हृत्पांडुरोगतमकश्रामश्वाश्रमपीडितः ।
बीजोपघातजं क्लैब्यं ध्वजभंगकृतं शृणु ॥९॥
अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् ।
अत्यम्बुपानाद्विषमपिष्टान्नगुरुभोजनात् ॥१०॥
दधिक्षीरानूपमांससेवनादतिकर्शनात् ।
कन्यानां चैव गमनादयोनिगमनादपि ॥११॥
दीर्घरोम्णीं चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गंधां दुष्टयोनिं च तथैव च परिस्नुताम् ॥१२॥
नरस्य प्रमदां मोहादतिहर्षात्प्रगच्छतः ।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ॥१३॥
अधावनाद्वा मेढ्रस्य शस्त्रदंतनखक्षतात् ।
काष्ठप्रहारनिश्शेषशूकानां चातिसेवनात् ॥
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्त्तते ॥१४॥
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ॥१५॥
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ।
मांसवृद्धिर्भवेच्चापि व्रणाःक्षिप्रं भवंत्यपि ॥१६॥
पुलाकोदकसंकाशः स्रावः श्यावारुणप्रभः ।
वलयीकुरुते चापि कठिनं च परिग्रहम् ॥१७॥
ज्वरस्तृष्णा भ्रमो मूर्च्छाच्छर्दिश्चास्योपजायते ।
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम् ॥१८॥
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः ।
बस्तौ वृषणयोर्वाऽपि सेवन्यां वंक्षणेषु च ॥१९॥
कदाचित्पिच्छिलो वापि पाण्डुस्रावश्च जायते ।
श्वयथुश्च भवेन्मंदरिगमितोऽल्पपरिस्रवः ॥२०॥

चिरात्सपाकं व्रजति शीघ्रं वाथ प्रपद्यते ।
जायन्ते कृमयश्चापि क्लिद्यते पूतिगंधि च ॥२१॥
प्रशीर्यते मणिश्चास्य मेढ्ं मुकावथापि च ।
ध्वजभंगकृतं क्लैब्यमित्येतत्समुदाहृतम् ॥
एवं पंचविधं केचिद् ध्वजभंगं वदंत्यपि ॥२२॥
पित्रोरत्यल्पवीर्यत्वादासेक्यः पुरुषो भवेत् ।
सशुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥२३॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ।
स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥२४॥
स्वगुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत्प्रवर्तते ।
कुम्भिकः स तु विज्ञेयः ईर्ष्यकं शृणु चापरम् ॥२५॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्तते ।
ईर्ष्यकः स तु विज्ञेयो दृग्योनिरयमीर्ष्यकः ॥२६॥
यो भार्यायामृतौ मोहादंगनेव प्रवर्तते ।
ततः स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञितः ॥२७॥
ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि ।
तत्र कन्या यदि भवेत्सा भवेन्नरचेष्टिता ॥२८॥
आसेक्यश्च सुगंधी च कुम्भिकश्चेर्ष्यकस्तथा ।
सरेतसस्त्वमी ज्ञेया अशुक्रः षण्ढसंज्ञितः ॥२९॥
अनया विप्रकृत्या तु तेषां शुक्रवहाः शिराः ।
हर्षात्स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥३०॥
क्लैब्यं जरासम्भवं हि प्रवक्ष्याम्यथ तच्छृणु ।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥३१॥
अथ च प्रवरे शुक्रं प्रायशः क्षीयते नृणाम् ।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥३२॥

वलवर्णेन्द्रियाणां च क्रमेणैव परिक्षयान् ।
परिक्षयादायुषश्चाप्यनाहारच्छ्रमात्क्रमात् ॥
जरासम्भवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ॥३३॥
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्वलः ॥३४॥
त्रिवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ।
एतज्जरासम्भवं हि चतुर्थं क्षयजं शृणु ॥३५॥
अतिप्रचिन्तनाच्चैव शोकात्क्रोधाद्भयादपि ।
ईर्ष्योत्कण्ठात्तथोद्वेगात्सदा विंशतिको नरः ॥३६॥
कृशो वा सेवते रूक्षमन्नपानमथौषधम् ।
दुर्वलप्रकृतिश्चैव निराहारो भवेद्यदि ॥३७॥
अथाल्पभोजनाच्चापि हृदये यो व्यवस्थितः ।
रसप्रधानधातुर्हि क्षीयेताशु नरस्ततः ॥३८॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ।
शुक्रावसानास्तेभ्यो हि शुक्रं धाम परं मतम् ॥३९॥
चेतसो वापि हर्षेण व्यवायं सेवते तु यः ।
शुक्रं तु क्षीयते तस्य ततः प्राप्नोति संक्षयम् ॥४०॥
घोरं व्याधिमवाप्नोपि मरणं वा समृच्छति ।
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ॥
एवं निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥४१॥
केचित्क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ।
वदन्ति शेफमश्छेदाद् वृषणोत्पाटनेन वा ॥४२॥
मातापित्रोर्वीजदोषादशुभैश्चाकृतात्मनः ॥४३॥
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ।
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ॥४४॥

तत्र संपूर्णसर्वाङ्गः स भवत्यपुमान् पुमान् ।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥४५॥

इति ध्वजभंगादि रोग समाप्तम् ॥७०॥

## शुक्रार्त्तव दोषनिदानम्

शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ।
यथा हि बीजं कालाम्बुकृमिकीटाग्निदूषितम् ॥ १ ॥
न विरोहति सन्दुष्टं तथा शुक्रं शरीरिणाम् ।
अतिव्यवायाद्व्यायामादसात्म्यानां च सेवनात् ॥ २ ॥
अकाले चाप्ययोनौ वा मैथुनं चैव गच्छतः ।
रूक्षतिक्तकषायातिलवणाम्लोष्णसेवनात् ॥ ३ ॥
मधुरस्निग्धगुर्वन्नसेवनाज्जरया तथा ।
चिन्ताशोकादिविस्रम्भाच्छस्त्रक्षाराग्निभिस्तथा ॥ ४ ॥
भयात्क्रोधादभीचाराद्व्याधिभिः कर्शितस्य च ।
वेगाघातात्क्षयाच्चापि धातूनां सम्प्रदूषणात् ॥ ५ ॥
दोषाः पृथक्समस्ता वा प्राप्य रेतोवहाः शिराः ।
शुक्रं संदूषयन्त्याशु तद्वक्ष्यामि विभागशः ॥ ६ ॥
फेनिलं तनु रूक्षं च विवर्णं पूति पिच्छिलम् ।
अन्यधातूपसंसृष्टमवसादि तथाष्टमम् ॥ ७ ॥
वातेन फेनिलं शुक्रं कृच्छ्रेण पिच्छिलं तनु ।
भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते ॥ ८ ॥
सनीलमथवा पीतमत्युष्णं पूतिगंधि च ।
दहेल्लिङ्गं विनिर्याति शुक्रं पित्तैश्च दूषितम् ॥ ९ ॥
श्लेष्मणा रुद्धमार्गं तु भवत्यत्यर्थपिच्छिलम् ।
स्त्रियमत्यर्थगमनादभिघातात्क्षयादपि ॥

शुक्रं प्रवर्तते जन्तोः प्रायेण रुधिरान्वयम् ॥१०॥
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम् ।
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ॥११॥
स्निग्धं घनं पिच्छिलं च मधुरं चाविदाहि च ।
रेतः शुद्धं विजानीयात्स्निग्धं स्फटिकसन्निभम् ॥१२॥
वातपित्तश्लेष्मशोणितकुणपगंध्यनल्पग्रंथिपूति
पूयक्षीणरेतसः प्रजोत्पादने न समर्थाः ॥१३॥
तत्र वातवर्णवेदनं वातेन । पीतवर्णवेदनं पित्तेन । श्लेष्मवर्णवेदनं श्लेष्मणा । शोणितवर्णपित्तवेदनं रक्तेन । कुणपगन्ध्यनल्पं च रक्तेन पित्तेन च । ग्रंथिभूतं श्लेष्मवाताभ्यां पूयनिभं पित्तवाताभ्यां क्षीणं शुक्रं प्रागुक्तं पित्तवाताभ्यां मूत्रपुरीषगंधि सर्ववर्णवेदनं सन्निपातेनेति तेषु कुणपग्रंथिपूयक्षीणरेतसः कृच्छ्रसाध्या मूत्रपुरीषरेतसोऽसाध्याः ॥
आर्तवमपि त्रिभि र्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति। तदपि दोषवर्णवेदनाभिर्ज्ञेयम् । तेषु कुणपग्रंथिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यम् ॥

इति शुक्रार्त्तवदोष निदानम् समाप्तम् ॥७१॥

## मंथरज्वरस्य लक्षणानि ।

ज्वरो दाहो भ्रमो मोहो ह्यतीसारो वमिस्तृषा ।
अनिद्रा मुखशोषश्च तालु जिह्वा च शुष्यति ॥ १ ॥
ग्रीवायां परिदृश्यन्ते स्फोटकाः सर्षपोपमाः ।
घृताशनात्स्वेदरोधान्मंथरो जायते नृणाम् ॥ २ ॥

इति मंथरज्वरस्य लक्षणानि समाप्तम् ॥७२॥

## अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्ण स्नायुं*विशोष्य च ॥ १ ॥
कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतन्तुनिं बहिः × ।
शनैः शनैः क्षताद्याति छेदात् कोपमुपैति च ॥ २ ॥
तत्पाताच्छोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत् ।
स स्नायुकेति विख्यातः क्रियोक्ताऽत्रविसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ।
संकोचं खञ्जतां चैव छिन्नतन्तुः करोत्यसौ ॥ ४ ॥
वातेन श्यावरूक्षः सरुगथ हि पात्पीतपीतः सदाहो-
ऽथश्वेतः श्लेष्मणा स्यात्पृथुगुरिमगुरोऽथ द्विदोषो द्विलिङ्गी ।
रक्तेनारक्तकान्तिः समधिकदहनोऽथ खलैः सर्वलिङ्गो,
रोगोऽसाध्यस्त्वेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः ॥५॥

॥ इति स्नायुकनिदानं समाप्तम् ॥७२॥

## अथ सोमरोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ।
अतिसारकयोगाद्वा गरयोगात्तथैव च ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान् मूत्रमार्गं व्रजन्ति हि ॥२॥
प्रसन्नाविमलाः शीता निर्गन्धा नीरुजः सिताः ।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥ ३ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ।
शिरः शिथिलता तस्या मुखं तालु च शुष्यति ॥ ४ ॥

* 'मांसं,'। × कुर्यात्तन्तुनिभंसूत्रं तदपिएडैस्तकसक्तुजै.।

मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा ॥ ५ ॥
संधारणाच्छरीरस्य ता आपः सोमसंज्ञिताः ।
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥ ६ ॥
इति सोमरोगनिदानं समाप्तम् ॥७४॥

## अथ शीतलानिदानम् ।

देव्या शीतलयाऽऽक्रान्ता मसूर्यः शीतला बहिः ।
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान् प्रचक्ष्महे ।
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥ २ ॥
सप्ताहान्निः सरत्येव सप्ताहात् पूर्णतां व्रजेत् ।
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३ ॥
(तासां मध्ये यदा काचित् पाकं गत्वा स्फुटेत् स्रवेत् ।
तत्रा व धूलनं कुर्याद्वनगोमय भस्मना ।
निम्बसत्पत्रशाखाभिर्मक्षिकामपसारयेत् ॥)
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ।
तां कश्चित्प्राह पक्वेति सा तु पाकं नगच्छति ॥ ४ ॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ।
सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम् ॥ ५ ॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ।
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥६॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ।
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ७ ॥
किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ।

एषा भवति बालानां मुखं* शुष्यति च स्वयम् ॥ ८ ॥
कोष्ठवज्जायते पष्ठी लोहितोन्नतमण्डला ।
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥ ९ ॥
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ।
एकस्फोटे च कृष्णा च बोधव्या चर्मजाभिधा ॥ १० ॥
इति शीतलानिदानम् ॥ ७५ ॥

## अथ कार्श्यनिदानम् ।

वातो रूक्षान्नपानानि लङ्घनं प्रमिताशनम् ।
क्रियातियोगः शोकश्च वेगनिद्राविनिग्रहः ॥ १ ॥
नित्यं रोगोऽरतिर्नित्यं व्यायामो भोजनाल्पता ।
भीतिर्धनादिचिन्ता च कार्श्यकारणमीरितम् ॥ २ ॥
क्रोधोऽतिमैथुनं चैव शुक्रव्याधिस्तथैव च ।
कार्श्यस्य हेतवः प्रोक्ताः समस्तैरपि तान्त्रिकैः ॥ ३ ॥
शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततिः ।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्वाननोमतः ॥ ४ ॥
व्यायाममतिसौहित्यं क्षुत्पिपासा महौषधम् ।
न कृशः सहते तद्वदतिशीतोष्णमैथुनम् ॥ ५ ॥
अतिकृशस्य रोगानाह:—
प्लीहा कासः क्षयः श्वासगुल्मार्शांस्युदराणि च ।
भृशं कृशं प्रधावन्ति रोगाश्च ग्रहणीमुखाः ॥ ६ ॥
कश्चिदन्यः कृशोऽतीव बलवान् दृश्यते तदा
आधानसमये यस्य शुक्रभागोऽधिको भवेत् ।
मेदोभागस्तु हीनः स्यात्स कृशोऽपि महाबलः ॥ ७ ॥

---

* 'मुखे'

मेदसोंऽशोऽधिको यस्य शुक्रभागोऽल्पको भवेत्।
स स्निग्धोऽपि सुपुष्टोऽपि बलहीनो विलोक्यते॥ ८ ॥
यथा पिपीलिका स्वल्पा यथा च वरटी बलात् ।
स्वतश्चतुर्गुणं भारं नीत्वा गच्छति सम्मुखम् ॥ ९ ॥
स्वभावात्कृशकायो यः स्वभावादल्पपावकः ।
स्वभावादबलो यश्च तस्य नास्ति चिकित्सितम् ॥१०॥

इति कार्श्यनिदानम् समाप्तम् ॥७६॥

## अथ विविधसन्धिवातनिदानम् ।

ये वातव्याधयः सन्धीनाश्रयन्ति शनैः शनैः ।
सद्यो वा शूलशोफाभ्यां सन्धिवाता हि ते मताः ॥ १ ॥
रसवातो रक्तवातो विषवातस्तथापरः ।
जीर्णवातो जरावातः पञ्च स्युस्तद्भिदा इह ॥ २ ॥

रसवातः—
शाखा-त्रिक-कटी-पृष्ठ-ग्रीवादिषु हि सन्धिषु ।
कचिच्छोफरुजाकारी सर्वगात्रप्रपीडनः ॥ ३ ॥
अविपाकाऽरुचियुतोऽल्पज्वरो विज्वरोऽथवा ।
रसवातगदः सोऽयमामवातश्च कथ्यते ॥ ४ ॥

रक्तवातः—
रुग्दाहरागयुक् शोथः सन्धौ यः शीघ्रसञ्चरः ।
चरणांगुष्ठमूलादौ रक्तवातः स उच्यते ॥ ५ ॥

विषवातः—
फिरङ्ग–पूयमेहादि विषेणापि तथाविधः ।
जान्वंस-कटिपृष्ठादौ विषवातः स उच्यते ॥ ६ ॥

सन्धिवातः—
संधिवातो भवन् भूयो नानासंधि समाश्रयः ।
निश्चलीकुरुते सन्धीन् जीर्णवातस्तदोच्यते ॥ ७ ॥

**जरावातः—**

जराजविकृतेरस्थ्नां जरतां कुब्जताकरः ।
पृष्ठवंशाश्रयः प्रायः स जरावातसंज्ञकः ॥ ८ ॥

**निदानम्ः—**

गुर्वतिस्निग्ध-मिष्टान्न-मत्स्यमांसादिभोजिनाम् ।
मन्दाग्नीनां निश्चलानामजीर्णेऽपि समश्नताम् ॥ ९ ॥
शीतवातादि सम्पर्काद् विबन्धानामुपेक्षणात् ।
सन्धिवाताः प्रजायन्ते हेतुलिङ्गादिभेदतः ॥१०॥
गुरुस्निग्धातिमधुर-भोजनाद्रसदोषतः ।
अचंक्रमणशीलानां रसवातसमुद्भवः ॥११॥
मद्यमांसप्रियाणान्तु विदाह्यन्नाद् विशेषतः ।
अल्पाम्बुपानात् प्रायेण रक्तवातसमुद्भवः ॥१२॥
विषवातनिदानन्तु पूयमेहादिकृद् विषम् ।
वर्धते तत्प्रभावश्च मिथ्याहारविहारतः ॥१३॥
शिशूनां दुर्बलानाञ्च प्रसूतानाञ्च योषिताम् ।
कदाचित् सन्धिवातः स्यात् स प्रायो विषजो मतः ॥१४॥
शोषिणां क्षयजन्यश्च सन्धिवातः कदाचन ।
कुलजाः सन्धिवाताश्च दृश्यन्ते बहुशो नृणाम् ॥१५॥
जरावातोऽपि दौर्बल्यात् सर्वधातुप्रहाणिजात् ।
षष्टेरूर्ध्वं भवेन प्रायः पृष्ठवंशादितः क्रमात् ॥१६॥
सन्धिवातास्तु सर्वेऽपि शीतवर्षादि योगतः ।
पद्यान्ते च प्रवर्धन्ते व्यायामस्य च वर्जनात् ॥१७॥

**सम्प्राप्तिः लिङ्गानि च—**

सामो वायुः श्लेष्मणा सानुबन्धः सर्वाङ्गेषु स्व-स्वलिङ्गैः प्रसर्पन्
कटी-पृष्ठ-त्रिक्-जान्वादिसन्धीन् रुजन्नुच्चैरामवातं विदध्यात्

सन्ध्यन्तरीयः श्लेष्मा च प्रायेणात्र प्रचीयते ।
नवे तस्मिन्, पुराणे तु क्रमशः स प्रशुष्यति ॥१९॥
शुष्यन्ति सन्धिबन्धन्यः पेश्यश्च तरुणास्थि च ।
रुजामान्द्यं च तेन स्याद् दृढामर्दसहिष्णुता ॥
क्रमशः संहतीभावात् सन्धिनिश्चलता तथा ॥२०॥
अध्यस्थिकीलकाश्चात्र सन्धीनुभयतः स्थिताः ।
अन्तर्बहिश्च दृश्यन्ते तेचोन्मर्दासहिष्णवः ॥२१॥
विदग्धपित्तदोषेण रक्तं सन्दूषितं यदा ।
वातं क्षोभयते घोरं रक्तवातस्तदा भवेत् ॥२२॥
पादांगुष्ठस्य मूलस्थं सन्धिं गुल्फस्थमेव वा ।
मणिबन्धादिसन्धिं वा स चादौ पीडयेद् भृशम् ॥२३॥
रक्तवाते पुराणे तु बहिरंगुलिसन्धितः ।
गुल्फ जान्वादिसन्धेर्वा शुभ्रवस्तु प्रचीयते ॥२४॥
अर्बुदास्तन्मयास्तेन सन्धीनुभयतः स्थिताः ।
कदाचित् कर्णपाल्योश्च पेश्यन्ते वपि कुत्रचित् ॥२५॥
स्फुटन्ति तु कदाचित्ते कृत्वा त्वग्भेदनं ततः ।
शुष्कक्षतानि कुर्वन्ति शुभ्रचूर्णं क्षरन्ति च ॥२६॥
जीर्णवातस्य भेदोऽयं रक्तवातसमुद्भवः ।
अंगुलीवक्रताकारी सर्वकर्मण्यताहरः ॥२७॥
अस्थिसन्ध्यभिघातोत्थः सन्धिवातः कदाचन ।
सन्धिनैश्चल्यकृत् काले भग्नादेर्दुरुपक्रमात् ॥२८॥
भेदकलिङ्गानि—

तुल्येऽन्नविषजातत्वे रक्तवाताऽमवातयोः ।
शीतोपशयिताद्ये स्यादुष्णोपशयिताऽपरे ॥२९॥

एकसन्ध्याश्रयस्त्वादौ पूर्वोऽन्यो बहुसन्धिगः ।
आद्ये रुग्दाहशूनत्वं मन्दरुक् श्वयथुः परे ॥३०॥
उपद्रवाः—
कदाचिदामवातादौ विषवाते तु भूरिशः ।
जानुसन्धौ भवेद् घोरो व्रणशोथो महारुजः ॥३१॥
लसीकास्रावयकरश्चिरपाकी च दारुणः ।
क्रोष्टुशीर्षकनामाऽयं खञ्जताकृदुपद्रवः ॥३२॥
वृक्कद्वारेऽथवा बस्तौ सिकता मूत्रसम्भवाः ।
संहत्य गुडिकाः कुर्युर्बहुधा रक्तवातके ॥३३॥
तासु काचित् निरुन्ध्याच्चेद् गवीनीमार्गमञ्जसा ।
तदा घोरं भवेच्छूलं मूत्राघातस्तथा वमिः ॥३४॥
बस्तिस्था मेहनस्रोतो रुन्धानाऽपि तथाल्परुक् ।
अन्येऽप्युपद्रवाः केचिद् रक्तवाते भवन्ति हि ॥३५॥
स्फोटः कण्डूरुदर्दश्च लसीकामेह एव च ।
सर्वाङ्गशोथस्त्वग्रोगाः श्वासो मूत्राल्पता तथा ॥३६॥
सामान्योक्तिः—
अम्लपित्तं रक्तपित्तं रक्तवातमिति त्रयम् ।
काय-धात्वग्निदोषोत्थं प्रायशस्तुल्यहेतुकम् ॥३७॥
इति विविधसन्धिवात निदानम् समाप्तम् ॥७७॥

## अथ आगन्तुपूयमेहनिदानम् ।

निरुक्तिः इतिवृत्तञ्चः—
पूयं रक्तं मूत्रणादावभीक्ष्णं
सरुग्दाहं शूनशिश्नः स्रवेच्चेत् ।
तदाऽगन्तुः पूयमेहोऽस्य नूनः
पुराणेऽस्मिन् मूत्रशेषेऽणु पूयम् ॥ १ ॥

पूर्वं वर्षचतुःशत्या म्लेच्छस्त्रीपुंसमङ्गमात् ।
सम्प्राप्तो दुष्टरोगोऽयं प्रसृतो भारतेऽधुना ॥ २॥

निदानं सम्प्राप्तिश्चः—

विशिष्टविषजीवाणुर्युग्मबिन्दूपलक्षितः ।
योनौ मूत्रप्रसेके वा क्षतं कृत्वाऽवतिष्ठते ।
तस्मात् क्षरति यः पूयो मैथुने तस्य संक्रमात् ।
अष्टाहात् स्यादुपस्थान्तः पूयासृक्स्रवणो व्रणः ॥ ३ ॥
आगन्तावपि रोगेऽस्मिन् पित्तं वातश्च कुप्यतः।
पूयाधिक्ये कफश्चापि रक्तं रक्तस्रवेऽधिके ॥ ४ ॥
पुंसो मूत्रप्रसेकस्य पूर्वांशाग्रे क्षतोद्भवः ।
नवीने पूयमेहे स्याद् मध्यांशे तु पुरातने ॥ ५ ॥
योषितां पूयमेहस्तु योन्यन्तः क्षतसम्भवात् ।
तज्ज: पूयश्चिरं तिष्ठन् श्वेतप्रदर उच्यते ॥ ६ ॥

लिङ्गानिः—

अथ मूत्रप्रसेकान्तः क्षतमुत्पद्यते यदा ।
पूयस्रावस्ततः सासृक् तीव्रदाहरुजान्वितः ॥ ७॥
उपस्थे व्रणशोथश्च मूत्रकृच्छ्रं च दारुणम् ।
ज्वरस्तृष्णा विबन्धश्च प्रहर्षे चार्त्तिरुल्वणा ॥ ८ ॥
आदौ चिकित्सया तेषु लिङ्गेषूपरतेष्वपि ।
दृश्यते प्रायशः शिश्नात् पूयबिन्दुस्रवः प्रगे ॥ ९ ॥
पूयाख्यमेहे तु पुरातने स्याद्
गूढं क्षतं मेहनमूलपृष्ठे ।
प्रायेण तस्मात् तनुसूत्रयुक्तं
पूयं स्रवेदाविलवारितुल्यम् ॥१०॥

योषितां तु नवे मेहे योन्यन्तः क्षतसंभवात् ।
यथासम्भवलिङ्गानि पुरुषस्य यथा तथा ॥११॥

स्त्रीणां पुराणे खलु पूयमेहे
गर्भाशयद्वार्य्यभितोऽन्तरे वा ।
क्षतात् स्रवेत् पूयमथाल्पमल्पं
प्रायेण नीरुक् तनु चाविलञ्च ॥१२॥

उपद्रवाः—

पूयमेहस्य पूयश्चेद् वस्तौ संक्रमते क्वचित् ।
व्रणशोथस्तदा तत्र वस्तिमेहनतोदयुक् ॥१३॥
रक्तपूययुतं मूत्रं माञ्जिष्ठं वाऽविलं स्रवेत् ।
वस्तिप्रशोथसंज्ञोऽयं दारुणः स्यादुपद्रवः ॥१४॥
अथ चेन् तद् विषं घोरं वस्तेरूर्ध्वं प्रसर्पति ।
तदा गवीन्यौ वृक्कौ च भवेतां विषदूषितौ ॥१५॥
सलसीकं तदा मूत्रं भूरिपूयं स मेहति ।
पूयवृक्काभिधः सोऽयं कादाचित्क उपद्रवः ॥१६॥
अथ गर्भाशयं बीजस्रोतसी च विशेषतः ।
दूषयेच्चेद् विषं घोरं तत्प्रशोथरुजाकरम् ॥१७॥
वीजस्रोतोनिरोधेन वन्ध्यत्वं योषितां तदा ।
असृग्दरश्च सरुजः पूयस्रावश्च भूरिशः ॥१८॥
यदा तु मुष्कौ प्रसरेत्तथाऽधिवृषणीद्वयम् ।
वीर्यस्रोतोयुगं वापि तत्प्रशोथरुजाकरम् ॥१९॥
वीर्यमार्गनिरोधेन तदा वन्ध्यः पुमान् भवेत् ।
अपि मैथुनसामर्थ्ये वीर्यं यस्मान्न सिच्यते ॥२०॥

पूयमेहविषं स्तोकं यस्य रक्ते प्रसर्पति ।
सन्धिवातोऽस्य विषजः प्रायश्च क्रोष्टुशीर्षकः ॥२१॥
पूयमेहविषे घोरे रक्तस्रोतसि सङ्गते ।
भूयिष्ठमात्रेऽभिन्यासः प्रायेणाऽसाध्यकोटिकः॥२२॥
पूयमेहस्य पूयश्चेन् कणामात्रो विशेद् दृशि ।
ततः स्याद् विषजो घोरो नेत्राभिष्यन्द आन्ध्यकृत्॥२३॥
गर्भिण्याः पूयमेहिन्याः प्रसूतस्य शिशोः स च ।
प्रायेण नेत्रनाशाय परस्यापि कचित्तथा ॥२४॥
अथ मूत्रप्रसेकस्य मूलाधारांशगस्य चेत् ।
क्षतरोपेण सङ्कोचाच्छनैर्मार्गो निरुध्यते ॥२५॥
वायौ प्रवृद्धे संङ्कोचोऽभ्यधिकोऽस्य पुनर्भवेत् ।
तदा प्रसेकसङ्कोचसंज्ञः कष्ट उपद्रवः ॥२६॥
निरुद्धमूत्र कष्टात् स दन्तान् खादति वेपते ।
मेहनं मर्दयेद् गाढं मुहुः कूजन् प्रवाहते ॥२७॥
शकृन्मुञ्चति मूत्रन्तु विन्दुशो नैव वा कचित् ।
शल्यतान्त्रिकसाध्योऽयं पुनर्भावी ह्युपद्रवः ॥२८॥
एष रोगः कदाचित् स्यादश्मर्यादिकृतात् क्षतात् ।
काले प्रवयसाञ्चापि पौरुषग्रन्थिवृद्धितः ॥२९॥

इति आगन्तुपूयमेह निदानम् समाप्तम् ॥७८॥

## फिरङ्गरोगनिदानम् ।

**निरुक्तिः—**

फिरङ्गजुष्टस्त्रीपुंस संयोगान् कालयोगतः ।
क्षतं यत् कठिनस्पर्शं शिश्नादौ मण्डलाकृति ॥ १ ॥
द्वि-त्रमासात्ततो यश्च विषवीसर्पकृत्त्वचि ।
विशिष्टक्रिमिजन्योऽसौ स्वकृतः स्यात् फिरङ्गकः॥ २ ॥

मातृरक्ते क्रिमिव्याप्ते यदपत्यं प्रजायते ।
तदपि स्याद् तदाक्रान्तं जीर्ण-शीर्ण स्वलक्षणैः ॥ ३ ॥
जन्मदोषकृतः सोऽसौ फिरङ्गःस्याद् दुरायतिः ।
बीजदोषकृतं केचित्तमेवाहुः फिरङ्गकम् ॥ ४ ॥

इतिहासः—

प्राग् वत्सरचतुःशत्याः फिरङ्गाणां प्रसङ्गतः ।
भारते समभूदेष रोगः क्रिमिविषोद्भवः ॥ ५ ॥
अथ स्त्री पुंससंयोगात् क्रमाद् व्याप्तं विषं हि तत् ।
भारतीयान् परांश्चापि संक्लेशयति सर्वथा ॥ ६ ॥

निदान सम्प्राप्तिश्च:—

आवर्त्तिनी लताशुङ्गा यथा तादृक् स्वरूपतः ।
स्वच्छत्रिपणिमासंज्ञः क्रिमिः सूक्ष्मोऽत्र कारणम् ॥ ७ ॥
क्रिमिजुष्टक्षतावास-योन्यादेः स्पर्शयोगतः ।
मैथुने स क्रिमिः क्रामन्नदृश्यो विशते तनुम् ॥ ८ ॥
प्रसुप्तवदसौ पक्षं द्वि-त्रपक्षानथापि वा ।
क्रिमियुक्पिडकां कुर्यात् क्षतं तूर्णं भवेत्ततः ॥ ९ ॥
दोषाः सर्वेऽथ कुप्यन्ति दूष्यन्ते सर्वधातवः ।
दृश्यन्ते तेन लिङ्गानि त्वङ्मांसाऽस्थिषु भूरिशः ॥१०॥
अथोपशान्तप्रायेषु शनैर्लिङ्गेषु तद्विषम् ।
कुर्यात् सुप्तोत्थितमिव काले कष्टानुपद्रवान् ॥११॥
मातृरक्ते प्रदुष्टे तु यदागर्भः प्रजायते ।
तदा व्यापद्यते भूम्ना जीवेद् वापि कदाचन ॥१२॥
जातश्च चिररोगी स फिरङ्गक्रिमिसंकुलः ।
विषाक्तरक्तलिङ्गानि काले काले प्रदर्शयेत् ॥१३॥

न वीर्यं नापि वा बीजं गर्भे सञ्चारयेत् क्रिमीन् ।
अमगातु तदाऽक्रान्ता गर्भस्तैः सम्प्रदूष्यते ॥१४॥

**लिङ्गानि दशात्रयत्रिभागश्चः—**

तिस्रो दशाः फिरङ्गस्य स्वार्जितस्य भवन्ति हि ।
प्रथमा तु क्षतोत्पत्तेः द्वि-त्रमासांस्ततः परम् ॥१५॥
आ-षण्मासं द्वितीया स्यात्त्वग्मांसास्थिसमाश्रया ।
वर्षं वर्षद्वयं वा सा न चेत् सम्यगुपक्रमः ॥१६॥
तृतीया त्वतिगम्भीरा दुर्ज्ञेया दुरुपक्रमा ।
वर्षाणां त्रिंशति तिष्ठेत् त्रिंशद्वर्षाणि वा क्वचित् ॥१७॥
तासाञ्च कालनियमो विषम्याल्पाधिकत्वतः ।
उपक्रमस्य भेदाच्च बहुधा परिवर्त्तते ॥१८॥

**लिङ्गानि (प्रथमादशा):—**

मासाद्वा सार्धमासाद्वा पक्षाद्वापि व्यवायतः ।
शिश्नमुण्डे तच्छदे वा भगोष्ठे वा तदन्तरे ॥१९॥
चूचुके वा मुखादौ वाऽप्यंगुल्यां वा गुदेऽपि वा ।
सम्भवेत् पिड़का स्वल्पा स्फुटिता सा क्षतप्रदा ॥२०॥
तरुणास्थिसमस्पर्शी मण्डलं स्वल्परुक्-स्रवम् ।
समुन्नतं सगर्तं वा क्रिमियुक् किणशेषि तत् ॥२१॥
क्षतसन्निहिते स्थाने लसीकाग्रन्थयस्तु ये ।
ते शूयन्ते न पच्यन्ते चलत्पूगफलोपमाः ॥२२॥
क्षतन्तु सार्धमासान्तः सूपक्रान्तं प्ररोहति ।
प्रथमेयं दशा प्रोक्ता फिरङ्गविषसम्भवा ॥२३॥
द्वितीयायां दशायान्तु द्वित्रमासैः क्षतोद्भवात् ।
प्रसर्पणं विषस्य स्यात् सर्वधात्वाशयादिषु ॥२४॥

आताम्रैः श्यावकृष्णैर्वा प्रायो विषममीमकैः ।
मण्डलैर्वत्वरामैर्वा व्याप्यन्ते बहुधा त्वचः ॥२५॥
कचिन्मसूरिकाकाराः कचिद्विस्फोटसन्निभाः ।
पिडकाश्च ऽस्य बहुशो गात्रचर्मत्वकण्डुगाः ॥२६॥
चिह्नानि तानि भूम्ना स्युर्जङ्घयोरुदरोरसोः ।
करपादतले चाऽपि न प्रायो मुखमण्डले ॥२७॥
ज्वरश्च विषमस्तस्य निशि तीव्रा शिरोरुजा ।
ज्वरपूर्वं कदाचिद् वा सम्भवेत्वाग्वैकृतम् ॥२८॥
वंक्षणया गलबाह्या वा ग्रन्थयोऽन्यत्र वा कचित् ।
इहापि शूलास्तिष्ठन्ति कठिनीभवन्ति च ॥२९॥
पतन्ति केशाः वर्धते कृशता पाण्डुता तनोः ।
दन्ताश्चापि विशीर्यन्ते कोथो हन्वस्थनि कचित् ॥३०॥
जायन्ते चाथ केषाञ्चित्त्वक् कलासङ्ग मस्थले ।
ओष्ठे गुदे भगे शिश्ने शोणोङ्काः पाण्डुरोन्नताः॥३१॥
शिनीन्ध्रशीर्षकाकाराः श्लेष्मजाश्चिरकारिणः ।
छत्राकाशांसि नामैते प्रायेण स्युः फिरङ्गजाः ॥३२॥
अस्थीनि सन्धयो वाऽपि प्रशूयन्ते रुजन्ति च ।
विशेषतश्च जङ्घास्थनः पुरोगाऽस्थिधरा कला ॥३३॥
तारामण्डलशोथश्च क्षतं वा स्वच्छमण्डले ।
दृष्टेर्विघातकृत् प्रायः शिरो-नेत्ररुजाप्रदम् ॥३४॥
फिरङ्गविषवीसर्पाः मर्माणि क्षतानि च ।
रोगसंक्रमणायाऽलं तद्विषक्रिमियोगतः ॥३५॥
नासामूले च कस्यापि पुञ्जमस्थनां विशीर्यते ।
नासासेतुविलोपश्च तेन स्यात् पूतिनस्ययुक् ॥३६॥

कस्यापि वाऽथ क्षतमुल्वणं स्यात्
तात्वस्थ्नि वा तालुनि कोमले वा ।
विशीर्णमांसास्थि ततश्च गर्त्तं
येनाऽन्नपानादि नसोनिरेति ॥३७॥
कस्यापि शल्कस्तरसंवृतं स्यात्
त्वचि क्षतं मण्डलवन् सचूड़म् ।
जीर्णे द्वितीयेऽथ फिरङ्गवेगे
तृतीयके वा शिखरिक्षतं तत् ॥३८॥
द्वितीयेयं दशा प्रोक्ता प्रायो वर्षद्वयावधिः ।
वर्षाद्वर्षार्धकाद्वाऽपि सोपक्रान्ता प्रशाम्यति ॥३९॥
तृतीया तु फिरङ्गस्य दशा वर्षद्वयात् परम् ।
वर्षाणां विंशतिं यावत्त्रिंशद्वर्षाण्यथाऽपिवा ॥४०॥
विषविस्फोटवास्तत्र विषगण्डकसंज्ञकाः ।
बहिर्वाऽभ्यन्तरे वाऽपि सम्भवन्ति यतस्ततः ॥४१॥
ते केचित् कन्दुकाकारा वदरादिनिभाः परे ।
उत्ताना वाऽथ गम्भीरास्त्वङ्मांसा स्थ्यादि पीड़ना ॥४२॥
बहिर्भवस्त्वसौ कुर्यान् प्रभिन्नः क्षतमण्डलम् ।
पिच्छागर्भं गभीरञ्च तच्चिरेण प्ररोहति ॥४३॥
अन्तर्भवस्तु प्रायेण कन्दुकाभोऽवतिष्ठते ।
वर्धते चाश्रयाऽशः स विविधं वैकृतं दिशन् ॥४४॥
अथाऽस्मिन् सति कोष्ठान्तर्लिंगं विद्रधिवद् भवेत् ।
फुस्फुसे यकृति प्लीह्नि पृष्ठवंशादिकेऽथवा ॥४५॥
मस्तिष्के वा सुषुम्नायाः काण्डे वा तस्य सम्भवात् ।
सकाङ्गकम्पोऽपस्मारः पंगुतादिश्च जायते ॥४६॥

महाधमन्या मूलेवाऽरोहिभागेऽथवा क्वचित् ।
प्रशोथस्फारता चैव ततो हृद्रोगसम्भवः ॥४७॥
प्रायशो धमनीनाञ्च सूक्ष्माणान्तु विशेषतः ।
कलाऽन्तरीयाशूयेत शनैः स्रोतोनिरोधकृत् ॥४८॥
धमनीभंगुरत्वं वा स्थितिस्थापकताक्षयात् ।
धमनीवृतिषु ह्यत्र सुधाकणकसञ्चयः ॥४९॥
इत्थं मस्तिष्कमूलस्थ-धमनी चक्रसम्भवाः ।
तिस्रस्तिस्रो धमन्यो या मस्तिष्कं तर्पयन्ति हि ॥५०॥
तासामेकतमायर्हि रुध्यते त्रुट्यतेऽथवा ।
तदा संन्यास रोगेणः मृतिः पक्षवधादि वा ॥५१॥

जन्मदोषफिरङ्ग लिङ्गानिः—

जन्मदोषकृतः प्रोक्तः फिरङ्गाख्यगदस्तु यः ।
लिङ्गान्युक्तानि तत्रस्युः क्रमस्तेषां तु भिद्यते ॥५२॥
बालः सजातः स्वस्थोपि प्रायो मासद्वयात् परम् ।
पीनसं श्वासकृच्छ्रञ्च वीसर्पादींश्च दर्शयेत् ॥५३॥
नासास्थिनी च शीर्येते नासासेतुश्च भज्यते ।
गलरोगश्चवाधीर्यं मूकता च ततःक्वचित् ॥५४॥
सृक्कणीच विदीर्येते मुखान्तश्च क्षताकुलम् ।
येनास्मै स्तन्यदायिन्यां फिरङ्गविषसंक्रमः ॥५५॥
ईषच्छोणान्यायतानि स्वल्पोन् सेधानि चास्य हि ।
छत्राकार्शांसिजायन्ते यथोक्तानि गुदादिषु ॥५६॥
गात्रेषु विपत्रीसर्पो विशेषातुनितम्बयोः ।
ऊर्वन्तर्भागयोश्चापि ताम्रः श्यावश्चदृश्यते ॥५७॥
यकृत् प्लीह्नोश्च वृद्धिस्यादस्थिप्रान्तेषु शूनता ।

सन्धिशोफश्च सरुजः प्रायोऽप्यस्थिगुटीवृतः ॥५८॥
सार्धवर्षेण वर्षेणलिङ्गान्येतानि भूरिशः ।
अपयान्ति पुनश्चास्य विषं कालात् प्रकुप्यति ॥५९॥
दन्तोद्गमे द्वितीयेतु यौवनारम्भ एव वा ।
तानि तान्येव लिङ्गानि पुनराविर्भवन्ति च ॥६०॥
प्रायशो राजदन्तौ च भवतः कीलका कृती ।
अग्रेऽर्धचन्द्रलूनौवा शीर्यन्ते च नखा अपि ॥६१॥
तारामण्डलगः शोथः क्षतं वा स्वच्छमण्डले ।
अभिष्यन्दश्चनेत्र स्याद् दृष्टिनाशस्ततः क्वचित् ॥६२॥
काले लब्धवयस्कस्य तस्य स्युर्विषगंडकाः ।
प्रायेणाभ्यन्तरास्ते च विषश्चेदत्र शिष्यते ॥६३॥
मस्तिष्कसौषुम्निकतन्त्रगं चेद्
विषं विदध्याद् विकृतिं तदन्तः ।
तदा शिशोरप्यनिलोद्भवाः स्यु
रंगेषु वैकल्यकरा विकाराः ॥६४॥
मस्तिष्कान्तः वृतिषु च फिरङ्गक्रिमिसञ्चये ।
मनोव्याधिं पुरस्कृत्य सम्भवन्त्यनिलामयाः ॥६५॥
उन्मादो वातकफजो वाग् जाड्यश्चौष्ठकम्पयुक् ।
अङ्गा नामवसादश्च शनैः कर्मण्यता क्षयः ॥६६॥
क्वचिद्वाचालता वाऽपि पङ्गुता च भ्रमिः क्लमः ।
यूनां प्रायेण रोगोऽयमायतौ मरणप्रदः ॥६७॥
वृद्धानामप्यसौ रोगः स्वकृते स्यात् फिरङ्गके ।
दुश्चिकित्स्यो मनोनाशी प्रत्याख्ये यश्चिरं स्थितः ॥६८॥

हन्ताऽयं दारुणो रोगो दहन् देहं तुषाग्निवत् ।
कुशलैरनुपक्रान्तश्चिरं क्लेशयते तनूम् ॥६९॥
इति फिरंगरोग निदानम् समाप्तम् ॥ ७९ ॥

## अशीति वातरोगनामानि

अशीतिर्वातजा रोगाः कथ्यन्ते मुनिभाषिताः ।
आक्षेपको हनुस्तम्भ ऊरुस्तम्भः शिरोग्रहः ॥ १ ॥
बाह्यायामोऽन्तरायामः पार्श्वशूलं कटिग्रहः ।
दण्डापतानकः खल्ली जिह्वास्तम्भस्तथाऽर्दितम् ॥ २ ॥
पक्षाघातः क्रोष्टुशीर्षो मन्यास्तम्भश्च पङ्गुता ।
कलायखञ्जता तूनी प्रतितूनी च खञ्जता ॥ ३ ॥
पादहर्षो गृध्रसी च विश्वाची चापबाहुकः ।
अपतानो व्रणायामो वातकण्टोऽपतन्त्रकः ॥ ४ ॥
अङ्ग भेदोऽङ्गशोषश्च मिन्मिनत्वं च कल्लता ।
प्रत्यष्ठीलाऽष्ठीलिका च वामनत्वं च कुब्जता ॥ ५ ॥
अङ्गपीडाऽङ्गशूलं च संकोचस्तम्भरूक्षताः ।
अङ्गभङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ॥ ६ ॥
मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम् ।
वातप्रवृत्तिः स्फुरणं सिराणां पूरणं तथा ॥ ७ ॥
कम्पः कार्श्यं श्यावता च प्रलापः क्षिप्रमूत्रता ।
निद्रानाशः स्वेदनाशो दुर्बलत्वं बलक्षयः ॥ ८ ॥
अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः ।
अनवस्थितचित्तत्वं काठिन्यं विरसास्यता ॥ ९ ॥
कषायवक्त्रताऽऽध्मानं प्रत्याध्मानं च शीतता ।
रोमहर्षश्च भीरुत्वं तोदः कण्डू रसाज्ञता ॥१०॥

शब्दाज्ञता प्रसुप्तिश्च गन्धाज्ञत्वं दृशःक्षयः ।

## चत्वारिंशत्पित्तरोगनामानि ।

अथ पित्तभवा रोगाश्चत्वारिंशदिहोदिताः ॥११॥
धूमोद्गारो विदाहः स्यादुष्णाङ्गत्वं मतिभ्रमः ।
कान्तिहानिः कण्ठशोषो मुखशोषोऽल्पशुक्रता ॥१२॥
तिक्तास्यताऽम्लवक्त्रत्वं स्वेदस्रावोऽङ्गपाकता ।
क्लमो हरितवर्णत्वमतृप्तिः पीतगात्रता ॥१३॥
रक्तस्रावोऽङ्गदरणं लोहगन्धास्यता तथा ।
दौर्गन्ध्यं पीतमूत्रत्वमरतिः पीतविट्कता ॥१४॥
पीतावलोकनं पीतनेत्रता पीतदन्तता ।
शीतेच्छा पीतनखता तेजोद्वेषोऽल्पनिद्रता ॥१५॥
कोपश्च गात्रसादश्च भिन्नविट्कत्वमन्धता ।
उष्णोच्छ्वासत्वमुष्णत्वं मूत्रस्य च मलस्य च ॥१६॥
तमसो दर्शनं पीतमण्डलानां च दर्शनम् ।
निःसरत्वं च पित्तस्य चत्वारिंशद्रुजः स्मृताः ॥१७॥

## विंशतिश्लेष्मरोगनामानि

कफस्य विंशतिः प्रोक्ता रोगास्तन्द्राऽतिनिद्रता ।
गौरवं मुखमाधुर्यं मुखलेपः प्रसेकता ॥१८॥
श्वेतावलोकनं श्वेतविट्कत्वं श्वेतमूत्रता ।
श्वेताङ्गवर्णता शैत्यमुष्णेच्छा तिक्तकामिता ॥१९॥
मलाधिक्यं च शुक्रस्य वाहुल्यं वहुमूत्रता ।
आलस्यं मन्दबुद्धित्वं तृप्तिर्घर्घरवाक्यता ॥२०॥
अचैतन्यं च गदिता विंशतिः श्लेष्मजा गदाः ।

आयुर्वैदिक और एलोपैथिक

# पारिभाषिक शब्द सूची

—*—

## २. ज्वर-FEVER.

| | |
|---|---|
| क्षुद्र ज्वर | Febricula, Pyrexia. |
| अपचन जनित ज्वर | Gastric fever (Alimentary fever) |
| स्नानोत्तर ज्वर | Bath fever. |
| रात्रि ज्वर | Bed fever. |
| प्रतिश्यायज ज्वर | Catarrhal fever. |
| परिश्रमज ज्वर | Fatigue fever. |
| सान्निपातिक ज्वर | |
| तन्द्रिक (वातश्लेष्मज) | Influenza. |
| प्रलापक (वातपित्तज) | Typhus. |
| रक्तष्ठीवी (कफपित्तज) | Pneumonic fever. |
| मन्याज्वर, भुग्ननेत्र, कर्कच | Cerebrospinal fever. |
| हारिद्रक | Yellow. " |
| मंथर (आंत्रिक मोतीझरा) | Typhoid. " |
| विषम आन्त्रिक ज्वर | Paratyphoid. " |
| पूय ज्वर | Pyaemia. " |
| गर्भविषज ज्वर | Absorption. " |
| पूतिविषज ज्वर | Septic " |

| | |
|---|---|
| सूतिका ज्वर | Puerperal. fever. |
| शोण ज्वर | Scarlet. ,, |
| ग्रन्थिक ज्वर | Plague. ,, |
| रक्तविनाशक ज्वर | Black-water ,, |
| सेन्द्रियविषज ,, | Septicaemia ,, |
| आगन्तुक ज्वर | Adventitious ,, |
| अभिघातज ज्वर | Traumatic ,, |
| औषधिगन्धज ज्वर | Hay ,, |
| अभिचारज ,, | Incantational ,, |
| अभिशापज ,, | Imprecational ,, |
| अभिषंगज ,, | Infectious ,, |
| काम ज्वर | Chronic fever due to the lustfulness. |
| क्रोध ज्वर | Pyrexia due to the mental exitement. |
| शोक ज्वर | Fever due to the sensitive bereavement. |
| भय ज्वर | Pyrexia owing to terrification. |
| भूताभिषङ्गज ज्वर | Fever due to bad feeling of the devil. |
| विषम ज्वर | Malerial fever. |
| संतत / विषम प्रकोपी } ज्वर | Malerial remittent fever |

| | |
|---|---|
| सतत ज्वर | Double quotidian ,, |
| सविराम नियमित ज्वर | Intermittent fever. |
| सविराम अनियमित ज्वर | Irregular fever. |
| अन्येद्युष्क (एकाहिक),, | Quotidion fever |
| तृतीयक ज्वर | Tertion fever |
| तृतीयक विपर्यय ज्वर | Malignant tertion ,, |
| चातुर्थिक ,, | Quartan fever. |
| चातुर्थिक विपर्यय ,, | Double quartan fever |
| काल ज्वर | Kala Azaror. |
| ,, (जीर्ण) | Cachexial fever. |
| अन्तर्वेगी घातक ज्वर | Algid pernicious ,, |
| विशेष ज्वर | Specific fever. |
| अल्प कालस्थायी ज्वर | Ephemeral fever. |
| संक्रामक ज्वर | Contagious fever. |
| आनुषङ्गिक ,, | Symtomatic ,, |
| अंशुघातज ज्वर | Thermic fever. |
| सूतिका ज्वर | Puerperal fever. |
| स्तन्योत्थ ज्वर | Milk fever. |
| प्रदाहज ज्वर | Inflammatory fever |
| प्रत्याघातज ज्वर | Reactionary fever. |
| मूषकदंशज ज्वर | Ratbite fever. |
| चिंचडीजन्य ज्वर | Tick fever. |
| संधिक ज्वर (आमवातिक) | Rheumatic fever. |

| | |
|---|---|
| दण्डक ज्वर | Dengue fever. |
| कर्णमूलिक ज्वर | Mumps fever. |
| श्लैपदिक ज्वर | Filarial fever. |
| परिवर्तित ज्वर | Relapsing fever. |
| कण्ठरोहिणी जन्य ज्वर | Diphtherial fever. |
| कृत्रिम ज्वर | Artificial fever. |
| अक्षतज ज्वर | Aseptic fever. |
| अस्थिभंगज ज्वर | Fracture fever. |
| जीर्ण ज्वर | Continued fever. |
| प्रलेपक ज्वर | Hectic fever. |

## ३. अतिसार प्रवाहिका, ज्वरातिसार

| | |
|---|---|
| अतिसार | Diarrhoea. |
| आमातिसार | Mucous colitis. |
| अभिषंगज अतिसार | Nervous diarrhoea. |
| बालातिसार | Infantile ,, |
| ग्रीष्मज अतिसार | Summer ,, |
| श्वेत अतिसार | Diarrhoea alba. |
| तीव्र ,, | Choleraic diarrhoea |
| पूयमय अतिसार | Diarrhoea chylosa. |
| अध्यशनज अतिसार | Crapulous diarrhoea. |
| रक्तातिसार | Dysenteric ,, |
| पार्वतीय अतिसार | Hill diarrhoea. |
| वसातिसार | Steatorrhoea. |

| | |
|---|---|
| शोकातिसार | Diarrhoea due to the bereavement. |
| प्रवाहिका | Dysentery. |
| गंधहीनक्षारीय (वेसिलरी) | Bacillary dysentery |
| अम्लगंधज (एमेबिक) | Amoebic „ |
| ज्वरातिसार | Diarrhoea with fever |

**४. ग्रहणी-Chronic diarrhoea, dysentry.**

| | |
|---|---|
| अन्त्रक्षय | Intestinal tuberculosis |
| जीर्णातिसारज ग्रहणी | Chronic diarrhoea. |
| „ (प्रवाहिकासह) | Chronic dysenteric diarrhoea. |
| रसक्षय | Coeliac disease. |
| राजग्रहणी– (संग्रहणी, श्वेतातिसार) | Sprue |

**५. अर्श-Haemorrhoids.**

| | |
|---|---|
| अन्तरार्श | Internal piles. |
| बाह्यार्श | External „ |
| शुष्कार्श | Nonbleeding piles. |
| रक्तार्श | Bleeding „ |
| मांसार्श | Polypus |

**६. अग्निमांद्य, अजीर्ण, विसूचिका, विलम्बिका**

| | |
|---|---|
| अग्निमांद्य | Loss of appetite or dyspepsia. |

| | |
|---|---|
| अजीर्ण | Indigestion, dyspepsia |
| वातनाड़ी विकारज | Nervous dyspepsia. |
| अजीर्ण वातप्रकोपज | Flatulent dyspepsia. |
| आमाशयप्रदाहज | Catarrhal ,, |
| भस्मक | Bulimia. |
| विलम्बिका-रसशेषाजीर्ण | Atonic dilatation of the stomach. |
| प्रतिरोधज आमाशय-प्रसारण, विलम्बिका | Obstructive dilatation of the stomach |
| विलम्बिका (बृहदन्त्रप्रसारण) | Idiopathic dilatation of the colon. |
| विसूचिका | Cholera. |
| ,, अपचनजन्य | Cholera due to indigestion. |
| विसूचिका ग्रीष्मकालीन | Cholera morbus. |
| विसूचिका कीटाणु-प्रकोपज, जानपदिक | Asiatic cholera. |
| विसूचिका शीतकालीन | Winter cholera sicca |

## ७. क्रिमिरोग

| | |
|---|---|
| चुरव कृमि | Oxyuris vermicularis (thread worm.) |
| उदरावेष्टा कृमि (कद्दुदाना) | Taeniasis, cestodus (Tape worm) |
| रूढ धान्यांकुरा कृमि | Trichinella spiralis. |

| | |
|---|---|
| अन्त्रदा कृमि | Ankylostoma duodenale (Hook worm) |
| पत्राकार कृमि | Trematodes (Fluke) |
| गण्डूपद ,, (महागुदा, गोल कृमि) | Nematodas Ascariasis (Round worm) |

**८. पाण्डु, कामला, कुम्भकामला, हलीमक**

| | |
|---|---|
| पोषणाभावज पाण्डु | Deficiency anaemia. |
| गर्भवृद्धिज पाण्डु | Anaemia of pregnancy. |
| रक्तस्रावज पाण्डु | Anaemia due to haemorrhage. |
| लसीका ग्रन्थि वृद्धिज पाण्डु | Lympho granuloma |
| सेन्द्रिय विषज श्लेष्मक | Leukaemia. |
| सान्निपातिक पाण्डु | Pernicious anaemia. |
| कीटाणु विषज पाण्डु | Anaemia due to toxin |
| कामला | Jaundice. |
| अवरोधात्मक कामला | Obstructve jaundice |
| जन्मजात कामला | Icterus melas, black jaundice. |
| बाल कामला | Icterus neonatorum. |
| रक्तविनाशज कामला | Haemolytic jaundice |
| विषज कामला | Toxic jaundice. |
| कुम्भ कामला संक्रामक | Febrile Icterus. |
| कुम्भ कामला | Passive congestion of liver. |

| | |
|---|---|
| हलीमक | Chlorosis |
| हलीमक कृमिज | Ankylostomiasis. |

### ९. रक्तपित्त-Haemorrhagic diseases.

| | |
|---|---|
| त्रिदोषज रक्तपित्त | Purpura |
| गम्भीर | Purpura haemorrha-gica. |
| सौम्य | Purpura Simplex. |
| आमवातिक रक्तपित्त | Purpura rheumatica. |
| वंशागत रक्तपित्त प्रवणता | Hereditary haemorrhagic diathesis. |
| वंशागत रक्तरोधक शक्ति ह्रासज रक्तपित्त | Haemophilia. |
| शीताद, कफ रक्तज रक्तपित्त | Scurvy. |

### १०. राजयक्ष्मा, क्षतक्षीण

| | |
|---|---|
| राजयक्ष्मा | Phthisis, T.B., Tuberculosis. |
| राजयक्ष्मा वंशागत (वंशागत क्षयप्रवणता) | Tuberculous diathesis |
| बाल सौम्य राजयक्ष्मा | Epi-tuberculosis |
| राजयक्ष्मा पिटिकामय | Tuberculosis miliary |
| राजयक्ष्मा सौत्रिक | Fibroid phthisis. |
| राजयक्ष्मा प्रसरणशील | Galloping phthisis. |
| ,, अस्थिक्षय | Bone T. T. |
| ,, अन्त्रक्षय | Intestinal T. B. |

| | |
|---|---|
| राजयक्ष्मा लसीकाक्षय | Lymph T. B. |
| ,, संधिक्षय | Joint T. B. |
| उरःक्षत | Pulmonary cavitation |

## ११. कास-Cough

| | |
|---|---|
| निशाकास | Night cough. |
| श्वासनलिका प्रदाह (वातिककास ?) | Croupous bronchitis, dry bronchitis. |
| ,, पूयमय | Bronchities purulent. |
| क्षतज कास | Heamoptysis. |
| कुक्कुर कास | Whooping cough. |
| क्षयज कास | Bronchiectasis. |
| कफज कास (नूतन) | Chronic bronchitis |
| कफज कास दुर्गन्धमय | Putrid bronchitis. |
| कफज कास (जीर्ण) | Bronchitis sicca. |
| पित्तज कास ? | Acute Bronchitis |

## १२. हिक्का, श्वास

| | |
|---|---|
| हिक्का | Hiccup, Hiccough. |
| हिक्का अन्नजा | ,, due to the gastric irritation. |
| हिक्का यमला | Double hiccup. |
| हिक्का क्षुद्रा | Mild hiccup. |
| हिक्का गम्भीरा | Serious ,, (Secondary due to the new growths of the mediastinum.) |

| | |
|---|---|
| महा हिक्का | Hiccup due to the cerebral irritation. |
| महा हिक्का उपद्रवभूत | Hiccup secondary due to the intra-cranial tumour. |
| हिक्का जनपदव्यापी | Epidemic hiccough. |
| श्वास | Dyspnoea. |
| महाश्वास | Amphoric brething due to the oedema of lungs. |
| ऊर्ध्वश्वास | Orthopnea due to the iufarction of the lungs. |
| छिन्नश्वास | Cheyne-stokes respiration. |
| क्षुद्रश्वास | Breathlessness. |
| हृदय विकृतिसह क्षुद्रश्वास | Cardiac asthma |
| वातनाड़ी विकारज ,, | Nervous ,, |
| अपचनजनित ,, | Gastric ,, |
| कण्ठमणि विकारज श्वास | Thymic ,, |

## १३. स्वरभेद-Hoarseness.

| | |
|---|---|
| प्रसेकमय स्वरयन्त्र प्रदाह | Catarrhal Laryngitis |
| शोथमय ,, | Oedematous ,, |
| क्षयज ,, | Tuberculous ,, |

| | |
|---|---|
| फिरङ्गज ,, | Syphilitic ,, |
| सादेर ,, | Spasmodic ,, |
| उपद्रवभूत ,, | Phlegmonous ,, |
| चिरकारोगोन्नाकार ,, | Laryngitis sicca. |
| त्रिदोषज स्वरभेद | Hoarseness due to the new growths of the larynx. |

### १४. अरोचक-Anorexia.

| | |
|---|---|
| वातनाड़ीविकारज अरुचि | Anorexia nervosa. |
| मानसविकारज ,, | Psychopathic anorexia. |

### १५. छर्दि-Vomiting.

| | |
|---|---|
| मस्तिष्कविकारज छर्दि | Cerebral vomiting. |
| अपतन्त्रकज छर्दि | Hysterical ,, |
| सगर्भा की घातक छर्दि | Pernicious ,, |
| पित्तप्रकोपज छर्दि | Bilious vomiting of pregnancy. |
| पुनरावर्तक छर्दि | Cyclic vomiting. |
| उदरायन्त्रविकारज छर्दि | Stercoraceous ,, |
| उत्क्लेश (अन्नका) | Regurrgitation. |
| हृल्लास | Nausea |

### १६. तृष्णा

| | |
|---|---|
| बढीहुई तृषा | Polydipsia. |

